# कुवलयानन्दः ।

( अलङ्कारः )

श्रीमदद्वैतविद्याचार्यरङ्गराजाध्वरीन्द्रवरदसूनुना-
श्रीमदप्पय्यदीक्षितेन विरचितः ।

---

श्रीमद्रामभट्टात्मजवैद्यनाथकृतचन्द्रिकाख्य-
टीकासहितः ।

—o—

बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण प्रकाशितः ।

—•:(•):•—

कलिकाता-सत्ययन्त्रे
मुद्रितः ।

शाकाः १७९९ ।

# कुवलयानन्दः।

( अलङ्कारग्रन्थः )

अमरीकबरीभारभ्रमरीमुखरीकृतम्।
दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥१॥

अनुचिन्त्य महालक्ष्मीं हरिलोचनचन्द्रिकां।
कुर्वे कुवलयानन्दसदलङ्कारचन्द्रिकाम् ॥ १ ॥

चिकीर्षिताविघ्नसिद्धये इष्टदेवतां स्तौति,—अमरीति, अत्र चरणमेव पङ्कजमिति मयूरव्यंसकादिसमासाश्रयणात्परिणामालङ्कारः, चरणे आरोप्यमाणस्य पङ्कजस्यारोपविषयचरणात्मतापरिणतिं विना दुरितदूरीकरणक्रियार्थत्वासंभवात्; परिणामः क्रियार्थश्चेद्विषयी विषयात्मनेतितल्लक्षणात्। नच पङ्कजमिवचरणमिति पूर्व्वपदार्थप्रधान उपमितसमास एवास्त्विति वाच्यं ? अमरीणां कबरीभारस्य केशपाशस्य सम्बन्धिनी सौगन्ध्यलोभात् तत्संश्लिष्टा या भ्रमरी तया मुखरीकृतमिति विशेषणस्यानुगुण्याभावात् तस्य पङ्कजगतत्वेनैव प्रसिद्धेरिति एतद्विशेषणावगतेन च पादपतनेनाभिव्यज्यमाना गौरीविषया सुराङ्गनागता रतिः कविगतां तां पुष्णातीति प्रेयोऽलङ्कारोऽपि बोध्यः ॥ १ ॥

परस्परतपःसम्पत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥२॥
उद्घाट्य योगकलया हृदयाब्जकोशं,
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।

---

परस्परेति,प्राञ्चौ पुरातनौ,जायापती अर्थादुमामहेश्वरौ,स्तुमः । किं भूतौ—प्रपञ्चस्य जीववर्गस्य मातापितृरूपौ, निरुपाधिकृपाश्रयत्वाद्धितोपदेष्टृत्वाच्च । तथा परस्परसम्बन्धिन्यास्तपः सम्पत्तेः फलवदाचरितं परस्परस्वरूपं ययोस्तौ, अत्र परशब्दस्य क्रियाविनिमयविवक्षायां कर्म्मव्यतीहारे सर्व्वनाम्नोद्वे वाच्ये इति वार्तिकेन द्विर्भावअसमासवद्भावे, पूर्व्वपदस्थस्य सुपः सुर्वक्तव्य इत्यनेन सुपः स्वादेशे च परस्परशब्दव्युत्पत्तेः पार्वतीतपःसमृद्धिफलायितः परमेश्वरः, परमेश्वरतपःसम्पत्फलायिताच पार्वतीत्यर्थोलभ्यते । तपःसम्पत्तेश्च फलं—निरतिशयानन्द इति तदुपमया परस्परं परमप्रेमास्पदत्वलक्षणः शृङ्गारोव्यज्यमानः सौभाग्यातिशयव्यञ्जनमुखेन शिवयोर्भावप्रकर्षं पर्यवस्यतीति सहृदयैराकलनीयं । मातापितराविति रूपकाभ्यामुक्तोपमयोः संसृष्टिः, परस्परञ्चोपमयोः फलायितेत्येकवाचकानुप्रवेशलक्षणः सङ्कर इति दिक् ॥ २ ॥

सम्प्रति प्रतिपिपादयिषितानामलङ्काराणां व्युत्पत्तेः स्वतोऽपुरुषार्थतया फलत्वयोगात्तस्यारसास्वादौपयिकत्वेन फलत्वं प्रेक्षावतां प्रकृतग्रन्थप्रवृत्तये सूचयितुं शृङ्गाररसाधिदैवतं श्रीकृष्णं प्रति रसास्वादानन्दं प्रार्थयते,—उद्घाटेति, स मुकुन्दो मे मह्यं शश्वत् भवं=शाश्वतिकं, भस्मावरणतया सदा प्रकाशमानं, शैशो-

यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयः, स मे दिशतु शाश्वतिकं मुकुन्दः ॥२॥
अलङ्कारेषु बालानामवगाहनसिद्धये।

विगलितवेद्यान्तरमानन्दं, रसो वै स इति श्रुतेः रसपदाभिधेयं, दिशतु=ददात्वित्यर्थः। यथाश्रुते मुक्तिप्रार्थनायाः प्रक्रते ऽसङ्गत्यापत्तेः; स कः योधन्यैर्महामहिमपुण्यशालिभिर्नारदादिमुनिभिर्योगकलया=योगकौशल्येन, हृदयाब्जस्य=उरसोमध्यवर्त्तिनोहृदयपुण्डरीकस्य, कोशं=मुकुलं, अधोमुखतया विद्यमानं, उद्घाटय=रेचकप्राणायामेनोर्ध्वमुखं कृत्वा, चिराद्बहुकालं, यथारुचि=यथेच्छं गृह्यमाणोऽपि रामकृष्णाद्यभिमतमूर्तिध्यानगोचरीक्रियमाणोऽपि, परितः पूर्णं रूपमस्य तथाभूतोऽपरिच्छिन्नब्रह्मरूपः, अविरतं=निरन्तरं मुक्तिदशायां, स्फुरति=प्रकाशत इति विरोधालङ्कारः, औपासनिकरूपस्य कल्पितत्वेन च तत्परिहारः। अथवा योगिभिरप्यचिन्त्यस्वरूप इति माहात्म्यातिशयवर्णनं। तत्र योगिगतभगवद्विषयकरतिभावस्य कविगतं तं प्रत्यङ्गतया प्रेयोऽलङ्कारः ॥ २ ॥

चिकीर्षितस्य ग्रन्थस्य प्रयोजनाभिधेये प्रदर्शयति,—अलङ्कारेष्विति,एतच्चोभयान्वयि; अलङ्कारेषु=अर्थालङ्कारेषूपमादिषुविषये, बालानामव्युत्पन्नानां, तेष्ववगाहनस्य व्युत्पत्तेः सिद्धये इत्यर्थः, तेषां ये लक्ष्यलक्षणे तयोः संग्रह इति नित्यसापेक्षत्वात्समासः। लक्ष्यं=उदाहरणं ॥ अलङ्कारत्वं च=रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या, विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता, तदवच्छेदकत्वं, अनुप्रासादिविशिष्ट-

ललितः क्रियते तेषां लक्ष्यलक्षणसंग्रहः ॥४॥
येषाञ्चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः ।
प्रायस्तएव तेषामितरेषान्त्वभिनवा विरच्यन्ते॥५॥
उपमा—यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।

---

शब्दज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वयः । शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकतायां विषयितयावच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात् । रसवदाद्यलङ्कारसंग्रहाय व्यंग्योपमादिवारणाय च भेदद्वयगर्भसत्यन्तोपादानम् ॥ ४ ॥

परकीयग्रन्थापहारशङ्कानिरासायाह,—येषामिति,येषामलङ्काराणां, चन्द्रालोके=चन्द्रालोकाख्यग्रन्थे,त एवेत्यनन्तरं लिख्यन्त इति शेषः । तत्र स्थितानामपि केषाञ्चिदलेखनात् प्राय इत्युक्तं । यथा ऽनन्तरश्लोकस्योत्तरार्धं । तत्रैवं दृश्यते,—हृदये खेलतोरुच्चैस्तन्वङ्गीस्तनयोरिवेति,स्वयन्त्वन्यदेव विरचितमिति। एवञ्च तदीयत्वेन कथनाद्दोषशङ्कानिरासः ॥ ५ ॥

सम्प्रत्यर्थालङ्कारेषु निरूपणीयेषु बहुलालङ्कारघटकतया सुप्रसिद्धतया च प्रथममुपमालङ्कारं लक्षयति,—उपमेति,अयञ्च लक्ष्यनिर्देशः, शेष लक्षणं । सादृश्यलक्ष्मीश्चमत्कृतिजनकता, तद्विशिष्टसादृश्यमिति यावत्, धर्मधर्म्मिणोरभेदोपचारात् । लक्षणं व्याचष्टे,—यत्रेति, यत्र=काव्ये, उल्लसति=स्फुरति, तद्भावे पयार्थः, तच्च शक्तिलक्षणान्यतरसहकारिण बोधकत्वसम्बन्धेन उपमानमधिकगुणं, चन्द्रादि । उपमेयं=वर्ण्यमानं,कामिनीवदनादि । सहृदयः॥ काव्यभावनापरिपक्वबुद्धिः । व्यङ्ग्यस्य मर्यादा=प्रतीति-

हंसीव कृष्ण! ते कीर्त्तिः स्वर्गङ्गामवगाहते ॥६॥
यत्रोपमानोपमेययोः सहृदयहृदयाह्लादकत्वेन चारु-
सादृश्यमद्भुततयोल्लसति, व्यङ्गमर्यादां विनास्पष्टं प्रका-
शते, तत्रोपमालङ्कारः। हंसीवेत्युदाहरणम्।

---

नियमरूपा यया सा व्यञ्जनेऽर्थः। यत्रोपमानोपमेययोरिति स्वरूपकथनं नतु लक्षणान्तर्गतं, व्यावर्त्तनीयाभावात् आत्माश्रयापादकत्वाच्च उपमानत्वोपमेयत्वयोरुपमाघटितत्वात्—एतच्चाग्रे व्यक्तो भविष्यति। इत्थं चालङ्कारत्वे सति सादृश्यत्वमुपमालङ्कारलक्षणं बोध्यं, एवमग्रेऽप्यधिकारप्राप्तमलङ्कारत्वविशेषणं बोध्यं॥ हंसीत्यादि, अत्र तावदिवार्थे सादृश्ये निरूपितत्वसंसर्गेण हंस्यादेरन्वयः, सादृश्यस्य प्रयोजकत्वसंसर्गेण स्वर्गङ्गावगाहनाश्रयत्वरूपे साधारणधर्मे, तस्य च स्वरूपसम्बन्धेन कीर्त्तौ सादृश्यस्य निपातार्थतया नामार्थं प्रति साक्षात् सम्बन्धेन विशेष्यत्वे विशेषणत्वे च बाधकाभावात्,तथा च—हंसीनिरूपितसादृश्यप्रयोजकस्वर्गङ्गाकर्म्मकावगाहनाश्रयत्ववती कीर्त्तिरिति बोधः। नचैवं स्वर्गङ्गावगाहनमिव शब्दस्येत्याद्यग्रिमग्रन्थे धात्वर्थस्य समानधर्म्मत्वोक्तिर्विरुद्धेति वाच्यं,तदाश्रयत्वस्य समानधर्म्मत्वे तस्य तथात्वस्यौचित्यापातत्वेन विरोधाभावात्, तथासति तत्रैव कुतो न सादृश्यान्वय इति चेत्? न, धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेण शाब्दबोधे विशेष्यतया विभक्त्यर्थोपस्थितेर्हेतुत्वात्। नच निपातार्थभिन्नवृत्तित्वेन प्रकारता विशेषणीयेति वाच्यं,घटोनपश्यतेत्यादौ घटाद्यन्विताभावस्य कर्मतासंसर्गेण दर्शनेऽन्वयापत्तेः। यदितु धात्वर्थेऽपि तात्पर्यवशात्

सादृश्यान्वयोऽनुभवसिद्धस्तदा धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन नान्वयबुद्धिं प्रति नञ्जन्योपस्थितेः प्रतिबन्धकत्वमात्रं परिकल्प्य घटोन पश्यतीत्यादौ पूर्वोक्तान्वयबोधोनिराकरणीय इति दिक् ॥ एवमरविन्दमिव सुन्दरवदनमित्यादावरविन्दादिनिरूपितसादृश्यस्य प्रयोजकतासंसर्गेण सुन्दरपदार्थैकदेशेपि सुन्दरत्वेऽनुभवबलादन्वयस्तद्विशिष्टस्य चाभेदेन मुखादौ । इत्यञ्चारविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नं वदनमित्यन्वयबोधः, अरविन्दसुन्दरमिति समासेत्वरविन्दपदेन अरविन्दनिरूपितसादृश्यप्रयोजकं लक्ष्यते, तच्चाभेदेन पदार्थैकदेशे सौन्दर्येऽन्वेति, एवञ्चारविन्दनिरूपितसादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्नं वदनमित्यन्वयबोधः । एकदेशान्वयायोगादरविन्दपदमेव लक्षणया सर्वार्थबोधकं सुन्दरपदं तु तात्पर्यग्राहकमित्येके । अरविन्दमिव वदनमित्यत्रारविन्दनिरूपितसादृश्यवद्वदनमिति बोधः,सादृश्यस्य निपातार्थतयाऽभेदेन नामार्थान्वये बाधकाभावात् । अरविन्दमिव भातीत्यत्र भातेर्ज्ञानार्थकत्वेऽरविन्दपदस्य अरविन्दनिरूपितसादृश्यप्रकारकज्ञानविषये लक्षणा, तस्य चाभेदेन मुखादावन्वयः,शेषान्तात्पर्यग्राहकं, पूर्वोक्तदिशा वा सादृश्यस्यैव प्रकारितासंसर्गेण धात्वर्थेऽन्वयः, अत्रैव सौन्दर्येणेति धर्मोपादाने तृतीयार्थस्य प्रयोज्यत्वस्य सादृश्येऽन्वयात् सौन्दर्यप्रयोज्यारविन्दनिरूपितसादृश्यप्रकारकज्ञानविषय इति बोधः । आद्यकल्पेतु अरविन्दपदमेव सर्वार्थबोधकमितरत्तात्पर्यग्राहकमिति ध्येयं । इयञ्च सादृश्यस्य पदार्थान्तरत्वमते शाब्दबोधरीतिरुपदर्शिता, तस्य समानधर्मरूपत्वे तु चन्द्रइव मुखमित्यादौ चन्द्रवृत्तिधर्मवन्मुखमिति बोधः,अत्रै वाह्लादकमिति

इयञ्च पूर्णोपमेत्युच्यते इमौ कीर्त्तिः स्वर्गङ्गाव गाहनमिव शब्दस्चेत्येतेषामुपमानोपमेयसाधारणधर्म-

समानधर्मोपादाने इवार्थस्य धर्मस्याह्लादकत्वे पदार्थैकदेशेऽन्वयः, तदसहिष्णुतायां तु चन्द्रनिष्ठाह्लादकत्ववति आह्लादकपदस्य लक्षणा, चन्द्रादिपदं तात्पर्यग्राहकं चन्द्र-सदृश मित्यवारेक-देशे सादृश्ये चन्द्रान्वयः, स-सम्बधिकत्वात्; सदृशपदं वा चन्द्रसा-दृश्य-विशिष्टे लाक्षणिकम् अतैवाह्लादकत्वेनेतुरक्ता वभेद स्तृतीयार्थ स्तस्य च सदृशपदार्थैकदेशे धर्मेऽन्वयस्तथा चाह्लादकत्वा-भिन्नचन्द्रवृत्तिधर्मवदभिन्नं मुख मिति बोधः। सदृशपदमिव वा सर्वार्थबोधक मितरतात्पर्य्यग्राहक मित्येवंविधा अन्वयसरणि-श्रेणय स्तत्र तत्र शब्दव्युत्पत्तिनिपुणैरनुसन्धेया इत्यलं प्रसक्तानु-प्रसक्तपरिचिन्तनेन ॥ ६ ॥

पूर्णोपमेतीत्यनन्तर मालङ्कारिकै रिति पूरणीयं, तत्त्वं च विशेषत उपात्तशब्दशक्तिप्रतिपादितोपमानोपमेयकत्वे सति-विशेषतः शब्दोपात्तसमानधर्मकत्वे च सति विशेषतः स्वनि-रूढशब्दगम्यत्वं, स्वत्र इमुपमापरम्, उपमानलुप्ताया मपि लक्ष-णयोपमानप्रतिपत्ते स्तद्वारणाय शक्तीति उपमेयलुप्तायां स्मर-वधूयन्तीत्यादा वात्मन उपमेयस्या ध्याहृतेनात्मान मिति शब्देन बोधनादुपात्तेतिशब्दविशेषणम् एवमपि तन्वीत्यने-नात्रोपमेयस्य कान्यसा सदृशं न सदृशत इतैवं विधायां लुप्तोपमानाया मुपमानस्य च सदृशपदोपात्तत्वाद्विशेषत इति उपमेयोपमानतावच्छेदकरूपेणेत्यर्थः; धर्मलुप्ताया मप्युपमा-वाचकेन सामान्यतो धर्मस्योपात्तत्वाद्विशेषत इति, उपमाप्रयो-जकतावच्छेदकरूपेणेत्यर्थः वाचकलुप्ताया मपि लक्षणयोप-

मानादिपदेनोपमावगमात्तद्वारणाय विशेषतः स्वनिरूढ़े ति उपमायां च निरूढ़ा इववद्वायथाशब्दाइत्याद्यभियुक्तोक्तिसंग्रहीता इवादयः, अत्र निपातरूपस्येवादे रुपसर्गवत् द्योतकत्वमेव, कथ मन्यथा "शरै रुस्रै रिवोदीच्यानुद्धरिष्यन् रसानिवे" त्यादा वुस्रादिपदोत्तरतृतीयादिसङ्गतिः ? उस्रादे रुद्धरणक्रियां प्रत्यकरणत्वात्; इवार्थं सादृश्यान्वयित्वेन करणीभूतशरविशेषणत्वाभावाच्च। द्योतकत्वे तूस्रादि पदस्योस्रसदृशपरतयोस्रसदृशैः शरैरिति शरविशेषणत्वेन तृतीयादिसङ्गति रिति वैय्याकरणमतं तु नादरनीयम्। 'उपास्यते गुरु' रित्यादौ धात्वर्थासनक्रियाया अकर्मकतया कर्म्मलकारानुपपत्तिरूपबाधकस्योपसर्गवाचकतायामिवेवादिवाचकताया मभावेन दृष्टान्तवैषम्यस्य स्फुटत्वात्। विशेषणविशेष्ययोः समानविभक्तिकतायां 'विशेष्येण सहैकार्थं भवेद्यत्र विशेषणं। तत्र लिङ्गादयः प्रायो विशेष्यस्याविशेषणे' -इत्यनुशासनस्येवोपमानोपमेययोरपि तस्यां लिङ्गसंख्याविभेदेऽपि उपमानोपमेयता विभक्तिः पुनरेकैव उपमानोपमेययो रित्यनुशासनस्य सत्वे नोपमानपदोत्तरतृतीयादेः साधुत्वाशंतयोपपत्ते श्च तस्माद् वाचकत्व मेवेवादिनाम्; युक्तं चैतत्—अन्यथा सकलालङ्कारिकसंमतसेवशब्दप्रयोगे श्रौतीत्वस्य दत्तजलाञ्जलित्वापत्तेः; रूढ़िप्रयोजनयो रन्यतरस्याभावेन चन्द्रादिपदेन चन्द्रसदृशलक्षणायां निषिद्धलाक्षणिकत्वरूपनेयार्थत्वदोषापत्ते श्च ; अपिच इवादेर्द्योतकत्वनये चन्द्रादे रुपमानस्य पदार्थैकदेशतया तत्र साधारणधर्म्मान्वयानुपपत्ति रिति दिक्॥ उपमानेत्यादि। उपमानत्वञ्चोपमानिरूपकत्वेन विवक्षितत्वं, तदाश्रयत्वे न विवक्षितत्वं चोपमेयत्वं, साधारणत्वञ्च धर्म्मस्यारसिक मौपचारिकं

मौपम्यवाचकानान्तु ग्रहणमप्युपादानात्॥ ६ ॥

यथा वा—गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः।
शिरसा श्लाघते पूर्वम्परङ्कण्ठे नियच्छति ॥ ७ ॥

अत्र यद्यपि उपमानोपमेययोर्नैकः साधारणो धर्मः उपमाने ईश्वरे चन्द्रगरलयोर्ग्रहणमुपादानं तयोर्मध्ये

बिम्बप्रतिबिम्बभावकृतं श्लेषकृतं वस्तुप्रतिवस्तुभावेन समासभेदाश्रयणेनेत्यनेकधा चित्रमीमांसायां प्रपञ्चितम्। तत्र स्वर्गङ्गावगाहनस्य तथात्व मौपचारिकं कीर्त्तौ तस्य स्वारसिकत्वाभावात्। उपादानादिति, वाचकस्योपादाननिर्द्देशः इतरेषां तु शब्देन प्रतिपादनन्तदिति चिन्तनीयम् ॥ ६ ॥

साधारण्यप्रकारविशेषोपदर्शनायोदाहरणान्तर माह—यथा वेति, गुणदोषाविति, गुणदोषा वर्थात्परस्य गृह्णन् जानन् बुधः पण्डितः पूर्वं पूर्वनिर्दिष्टं गुणं शिरसा श्लाघते आन्दोलितेन शिरसा अभिनन्दयति परम्परतो निर्दिष्टं दोषं कण्ठे नियच्छति निरुणद्धि वाचा कण्ठात् बहिर्नोद्घाटयतीत्यर्थः। क इव? इन्दुक्ष्वेडौ चन्द्रगरले गृह्णन्नुपाददान ईश्वरो हर इव, सोपि हि पूर्वं चन्द्रं शिरसा श्लाघते तत् पूर्व्वकं धारयति—परञ्च गरलं, कण्ठे नियच्छति स्थापयतीति 'क्ष्वेडस्तु गरलं विष' मित्यमरः॥

शङ्कते—अत्र यद्यपीति। साधारणत्वेनाभिमतो धर्मः गृह्णन् शिरसा श्लाघते पूर्व्व मित्यादिनोक्तो यद्यपि नैको न साधारण इति योजना गृह्णन्नित्यादिनोक्त एकोऽपि धर्म्मः साधारणो नेति वा यथाश्रुते साधारणस्य साधारण्याभावोक्ते रसङ्गतत्वापत्तेः साधारण्याभावे हेतुः उपमान इत्यारभ्य इतिभेदा-

पूर्वस्य चन्द्रस्य शिरसा श्लाघनं वहनं उत्तरस्य गरलस्य कण्ठे नियमनं संस्थापनम् उपमेये बुधे गुणदोषया-र्ग्रहणं ज्ञानं तयोर्मध्ये पूर्वस्य गुणस्य शिरसा श्लाघनं शिरःकम्पेनाभिनन्दनम् उत्तरस्य दोषस्य कण्ठे निय-मनं कण्ठादुपरि वाचा अनुद्घाटनमिति भेदात्। तथापि चन्द्रगरलयोर्गुणदोषयोश्च बिम्बप्रतिबिम्बभा-वेनाभेदादुपादानज्ञानादीनां गृह्णन्नित्याद्येकशब्दो-पादानेनाभेदाध्यवसायाच्च साधारणधर्मतेति पूर्वस्मा-द्विशेषः। वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः

दित्यन्तेनोक्तः; समाधत्ते—तथापीति, वस्तुगत्या साधारण्याभावे पीत्यर्थः। चन्द्रगरलयो रित्यादि यथाक्रमं चन्द्रगुणयो र्गरल दोषयोरित्यर्थः बिम्बप्रतिबिम्बभावेन प्रतीयमानसादृश्ययो रुपमानोपमेयधर्म्मयो भिन्नशब्दोपात्ततद्रूपेण अभेदात् अभे-दाध्यवसायात् एतच्च साधारणधर्म्मतेत्यग्रेतनेनान्वितं ज्ञाना दीत्यादिना शिरसा बहुलाभिनन्दनयोः कण्ठस्थापन-तद्ब-हिरनुद्घाटनयोश्च संग्रहः। गृह्णन्नित्यादिना च शिरसा श्लाघते कण्ठे नियच्छतीत्यनयोः संग्रहः। अभेदाध्यवसायादिति, अभे-दस्याध्यवसाया दाहार्यनिश्चयादित्यर्थः। साधारण धर्म्मतु-तीति साधारणधर्म्मत्वाभिमानविषयतेत्यर्थः। पूर्व्वस्मात् पूर्वोदाहरणात् इति विशेष इत्यन्वयः। नचैवं साधर्म्य-प्रतीत्युपादानेपि वस्तुतस्तदभावात् कथ मुपमालक्षणसमन्वय इति वाच्यं? चमत्कारविशेषप्रयोजकसाधारणत्वाध्यवसाय-विषयधर्म्मत्वस्यैवोपमालक्षणत्वमित्यभिप्रायादिति लोके बिम्ब-

परस्परसादृश्या दभिन्नयोः पृथगुपादानं विम्बप्रति-
विम्बभाव इति आलङ्कारिकसमयः॥ ७॥

वर्ण्योपमानधर्म्माणामुपमावाचकस्य च।
एकद्वित्र्यनुपादानैर्भिन्ना लुप्तोपमाष्टधा॥ ८॥
तडिद्गौरीन्दुतुल्यास्या कर्पूरन्ती दृशोर्मम।
कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया॥९
यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः।
तदेतत्काकतालीय मवितर्कितसम्भवम्॥ १०॥

उपमेयादीनां चतुर्णां मध्ये एकस्य द्वयोस्त्रयाणां वा
प्रतिपादकशब्दाभावेन लुप्तोपमेत्युच्यते सा चाष्टधा।

प्रतिविम्बभावव्यपदेशस्य गगनजलाशयादिगतचन्द्रादिविषयतया
प्रसिद्धेः। कथं प्रकृते तद्व्यपदेश इत्याशङ्कायामाह—
वस्तुत इत्यादि, अभिन्नयोः तथाध्यवसितयोः। पृथगिति,
भिन्नशब्देनेत्यर्थः। विम्बप्रतिविम्बभावइति विम्बप्रतिविम्ब-
भावपदवाच्य मित्यर्थः। समयइति, सङ्केतइत्यर्थः॥७॥

पूर्णाया मुपमानादिसमग्रतानियमप्रसिद्धे स्तद्विपरीतायां
लुप्तोपमायां सर्व्वलोपनियमाशङ्कानिरासाय लक्षणपूर्व्वकं तां
विभजते—वर्ण्येत्यादिना, चकारो वा शब्दार्थे, तदनन्तरं च लोपे-
इत्याध्याहार्यम् एवंचेतरेतरयोगाविवक्षया वर्ण्यस्योपमानस्य
धर्म्मस्योपमावाचकस्य वा लोपे अन्यतमानुपादाने लुप्तोपमा
सा च एकद्वित्र्यनुपादानै रष्टधा भिन्नेति पूर्व्वापराभ्या मुक्तं
भवति॥ ८—१०॥

तड़िदित्यादीनुदाहरणानि अर्थतो व्याचष्टे—उपमेयादिना-
मिति, वस्तुतो लाघवात् पूर्णाभिन्नत्वं लक्षणं बोध्यं लक्षणवाक्य-

यथा—वाचकलुप्ता १ धर्मलुप्ता २ धर्मवाचकलुप्ता ३ वाचकोपमेयलुप्ता ४ उपमानलुप्ता ५ वाचकोपमानलुप्ता ६ धर्मोपमानलुप्ता ७ धर्मोपमानवाचकलुप्ता चेति ८ तत्रोपमानलोपरहिताश्चत्वारो भेदास्तडिद् गौरीत्यादि श्लोकेन प्रदर्शिताः तद्भिन्ना भेदा उत्तर श्लोकेन दर्शिताः तत्र तडिद्गौरीत्यत्र वाचकलोपस्तडिदिव गौरोऽर्थः, "उपमानानि सामान्यवचनै" रिति-समासविधायकशास्त्रकृतः। इन्दु तुल्यास्येत्यत्र धर्मलोपः सत्वैच्छिकः न शास्त्रकृतः। कान्त्या इन्दुतुल्या

गतं क्रममुपेक्ष्योदाहरणक्रमानुसारेण विभागं दर्शयति—यथेत्यादि, वाचकलुप्तेति, वाचकत्वं चात्रानुपूर्विविशिष्टवत्तयोपमाबोधने निरूढत्वं, तच्च शक्त्या निरूढलक्षणया वा तत्राद्यमिवादेर्द्वितीयं तु सदृशपदादेरिति तदभावात्तडिद्गौरीत्यादौ वाचकलोपः समासानुशासनेन निरूढलक्षणावगमेपि आनुपूर्विविशिष्टवत्तया शब्दविशेषस्य तदबोधनात्। शास्त्रकृतइति, शास्त्रप्रयुक्तइत्यर्थः। कर्पूरन्तीत्यत्रेति, अत्र सर्व्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्य इत्यनेन विहितः क्विप् लुप्तोपि स्मर्यमाणो धर्म्ममात्ररूपम् आचारं बोधयति, कर्पूरपदं च लक्षणया कर्पूरसादृश्यं तस्य चातिरिक्तत्वे पूर्व्ववत् प्रयोजकतासंसर्गेणाचारेऽन्वयो धर्म्मरूपत्वे त्वभेदेन, वस्तुतस्तु क्विब्लोपाप्रतिसन्धानेपि तथा बोधात् कर्पूरादिशब्दाएव कर्पूरादिसादृश्यप्रयोजकाभिन्नं तत्सादृश्याभिन्नं वाचारं लक्षयन्तीति युक्तम्। ननु वाचकस्येवादे रनुपादानाल्लोपोऽयुक्तः, साधारणधर्म्मस्य त्वाचाररूपस्य क्विबुपात्ततया कथं

स्येत्यपि वक्तुं शक्यत्वात्। कर्पूरन्तीत्यत्र धर्म्म-वाचकलोपः कर्पूरमिवाचरन्तीत्यर्थे विहितस्य कर्पूर-वदानन्दात्मकाचारार्थकस्य क्विप् "इव शब्देन सह लोपात् अत्र धर्म्मलोप ऐच्छिकः, नयनयोरानन्दा-त्मकतया कर्पूरन्तीति तदुपादानस्यापि सम्भवादिति कान्त्यास्मरवधूयन्तीत्यत्र वाचकोपमेयलोपः अत्र कान्तेरतिविशेषणसामर्थ्यात् स्वात्मानं कामवधूमिवाच रन्तीत्यर्थस्य गम्यमानतया स्वात्मान उपमेयस्य सह्हो-

लोपः? तत्राह—कर्पूरवदानन्दात्मकाचारार्थस्य क्विप् इति कर्पू-रस्येवेतीवार्थे वतिः आनन्दात्मकः, जनकतासम्बन्धेन वस्तुगत्या आनन्दस्वरूपो य आचारस्तद्बोधकस्येत्यर्थः। ननु क्विप् लोपाज्ञाने-प्याचारप्रतीतेः कर्पूरादिपदानामेव तद्बोधकत्वपक्षे कथं धर्म-लोपः सङ्गमनोयइतिचेत्? अत्र प्राञ्चः—एवमपि तद्वाचकतया विहितस्य क्विपो लोपात्तल्लोपव्यपदेशः अतएवात्र समानार्थकः क्यच् नोपात्तः तस्यालुप्तत्वादित्याहुः। नव्यास्तु धर्म्ममात्ररूपस्या-चारस्योपादानेपि आनन्दतादिना विशेषरूपेणानुपादानाद्धर्म-लोपोयुक्तएव अन्यथा इन्दुतुल्यास्येत्यादिधर्म्मलुप्तोदाहरणस्या सङ्गतत्वापत्तेः। नचैवं क्यजादावपि धर्म्मलुप्ता स्यादिति वाच्यम्? इष्टापत्तेरित्याहुः। स्मरवधूयन्तीत्यत्रेति, ननूपमानादाचार इति कर्म्मभूतादुपमानादाचारे क्यङो विधानात् स्मरवधूं रतिमिवा चरन्तीत्यवगमेप्यात्मानमन्यां वेति कथं निर्णयः? तत्राह—विशे-षणेति, रत्यनुरूपाचरणस्य कान्तिकरणकत्वरूप विशेषणसामर्थ्या-दित्यर्थः, कान्तेः स्वरसतः स्वीयत्वावगमादिति भावः। न चात्मन

पमावाचकेनानुपादानात् सत्वैच्छिकः स्वात्मानं स्मर-वधूयन्तोत्युपमेयोपादानस्यापि सम्भवात्। काकता-लीयमित्यत्र काकतालशब्दौ वृत्तिविषये काकताल समवेतक्रियावर्तिनौ तेन काकागमनमिव तालपतन-मिव काकतालमितीवार्थे समासाच्च तद्विषयादिति-ज्ञापकात्सुनानः उभयत्रोपमेयस्वस्य क्वचिद्गमनं तत्रैव रहसि तन्व्या अवस्थानं तेन स्वस्य तन्व्याश्च समागमः काकतालसमागमसदृश इति फलति, ततः काकतालमिव काकतालीयमिति द्वितीयस्मि-

*उपमेयस्य तन्वीपदेनोपादानात् कथं लोपइतिवाच्यं ? तस्या द्वितीयान्ततया कर्मभूतोपमेयासमर्पकत्वात् आत्मानमितग्ध्याहृते-नैव तद्वाधात् अत्र च स्मरवधूपदेन स्मरवधूसादृश्यं लक्ष्यते, तस्य च प्रयोजकत्वसंसर्गेणाभेदेन वाऽऽचारेऽन्वयः, तथा च स्मरवधूसादृ-श्यामिव आत्मकर्मको य आचारस्तदाश्रयस्तन्वीति बोधः। काक-तालीयेति वृत्तिविषये समासविषये ज्ञापकादिति इवार्थे समासा भावे तद्विषयादित्यनेनेवार्थविषयसमासानुवादोऽनुपपन्नस्तज्ज्ञा-ज्ञापक इत्यर्थः, उभयत्र काकागमनतालपतनयोः उपमेयमितर-नन्तरं क्रमेणेति शेषः। तेनेति, काकतालसमवेतक्रियापरयोः काकतालपदयोरिवार्थे समासेनेत्यर्थः। काकतालसमागमेति, अयभावः—काकागमनतालपतनयोरुपमानत्वे तदुपमेययोः स्वीय गमन-तन्व्यावस्थानयोः पृथगनुपात्तत्वे नोपमेयतयान्वतायोगात काकतालसमागम एवोपमानम्, इत्थञ्च काकतालसमागमसदृशः काकतालपदार्थस्तस्य चाभेदेन स्वीयतन्वीसमागमरूपे उपमेयेऽ

न्निवार्थे समासाच्च तद्विषयादितिसूत्रेण "इवे प्रतिकृताविल्यधिकारस्थेन कः प्रत्ययः। तथाच—पतनद्‌लितन्तालफलं यथा काकेनोपभुक्तमेवं रहो दर्शनक्षुभितहृदया तन्वी स्वेनोप भुक्तेति तदर्थः। ततश्चात्र काकागमनतालपतनसमागमरूपस्य। काककृततालफलोपभोगरूपस्य चोपमानस्यानुपादानात् प्रत्ययार्थोपमायामुपमानलोपः समासार्थोपमायां वाचकोपमानलोपः। सर्वोऽप्ययं लोपः क-प्रत्ययविधायकशास्त्रकृतः। अवितर्कितसम्भवमितिसाधारणधर्म्मस्यानुपादाने प्रत्ययार्थोपमायां धर्मोपमान-

न्वय इति। ततइति, तादृशसमासोत्तरमित्यर्थः। इतितदर्थइति, काकतालपदलक्षितस्य काककृततालफलोपभोगसदृशस्याभेदेन तन्वीरतिलाभरूपेणोपमेयेनान्वयादिति भावः। अत्र पतनद्‌लितमिति रहोदर्शनक्षुभितहृदयेति च बिम्बप्रतिबिम्बभावापन्नधर्मस्वरूपकथनं न त्वेवमन्वयाकारइति बोध्यम्। न च सकृदुच्चारिताभ्यां काकतालपदाभ्यां कथमुपमानद्वयावगम इति वाच्यम्। अनुभवानुसार्य्यनुशासनेन व्युत्पत्तिवैचित्र्यस्य स्फुटं प्रतिपत्तेरिति। एवं दुरूहत्वात्पदं व्याख्याय तत्रोपमानलुप्तादींश्चतुरोपि भेदान् प्रदर्शयितुमाह—ततश्चेति काकागमनेत्यादि काकागमनतालपतनरूपो यः समागमस्तद्रूपस्येत्यर्थः। इदञ्च काकागमनमिव तालपतनमिवेति महाभाष्यगतविग्रहवाक्यविरोधशङ्कापरिहारायोक्तं, समागमस्य तादृशक्रियाद्वयाभिन्नत्वेनोक्त-

लोपः। समासार्थोपमायां धर्मोपमानवाचकलोपः इति सूक्ष्मया दृष्ट्या वधारितव्यम्। एतेषामुदाहरणान्तराणि विस्तर भयान्नलिख्यन्ते ॥१० ॥

युक्त्या तस्योक्तार्थ एव पर्यवसानात्; विशिष्टोपमायां विशेषणोपमावगतिवत्समासोपमायामपि तदवयवक्रियोयोर्य्यथायोगं गम्यमानामुपमामभिप्रेत्य महाभाष्यकृतां तादृशविग्रहवाक्यप्रणयनमित्याशयः। धर्मस्यानुपादानइति तत्स्थाने अभवत् किं ब्रवीति ते-इति पाठइति भावः ॥ १० ॥

इति श्रीमत्तत्सदुपाख्य-रामभट्ट-सूरि-वरात्मज-वैद्यनाथ-
विरचितायाम् अलङ्कारचन्द्रिकाख्यायां कुवलयानन्द-
टीकाया मुपमाप्रकरणं सम्पूर्णम् ॥

:o:

उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ।
इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः ॥ ११

एकस्यैव वस्तुन उपमानोपमेयत्ववर्णनमनन्वयः, यद्यप्युपमानिरूपणानन्तरं तन्मूलालङ्कारेषु सम्भवात्सादृश्या उपमेयोपमैव प्रथमं निरूपयितुमुचिता न चत्वारोपि तत् सादृश्यनिबन्धनोऽनन्वयस्तथापि तं द्वितीयसदृशव्यवच्छेदफलकतया तृतीयसदृशव्यवच्छेदफलिकामुपमेयोपमामपेक्ष्यगौरवोपस्थिति क्रमभिप्रेत्य प्रथमं निरूपयति—उपमानोपमेयत्वमिति, उपमानत्वमुपमेयत्वं चेत्यर्थः; द्वंद्वान्ते श्रूयमाणत्वात् विवक्षत इति च शेषः। एवं चैकस्यैव वस्तुनो यदुपमानत्वमुपमेयत्वं च विवक्षते तदनन्वयइत्यन्वयः। असम्भवशङ्कानिरासाय मध्ये उदाहरणोक्तिः। नन्क्तलक्षणस्य भणितिरिव मतिर्मतिरिव चेष्टेत्यादि रशनोपमायामतिव्याप्तिः तत्र मत्यादेरेकस्यैव वस्तुन उपमानत्वस्योपमेयत्वस्य च वर्णनात् अथैकस्य वस्तुनो यदेकनिरूपितमुपमानत्वमुपमेयत्वं चेति विवक्षितम् एकपदस्यावृत्तिकल्पनात्, इत्थञ्च रशनोपमायां मत्यादेश्चेष्टादिनिरूपितमुपमानत्वं भणित्यादिनिरूपितन्तूपमेयत्वमित्येकनिरूपितोपमानोपमेयत्वविरहान्नातिव्याप्तिरित्युच्यते, तदा खमिव जलं, जलमिव खमित्युपमेयोपमापमानत्वस्योपमायामतिव्याप्तिः तत्रैकस्यैव वस्तुनो गगनस्य एकजलनिरूपितस्योपमेयत्वस्य च वर्णनादिति चेन्नैवं, एकस्यैवेतिविरोधद्योतकैवकारबलेन स्वाश्रयनिरूपितयो रुपमानोपमेयत्वयोर्लाभेन क्वाप्यतिप्रसङ्गाभावात्; अस्ति हि इन्दुरिन्दुरिवेत्यनन्वये उपमानत्वमुपमेयत्वञ्च स्वाश्रयेन्दुनिरूपितं न तु रशनोपमायामुपमेयोपमायां वेति सङ्क्षेपः।

वर्ण्यमानमपि स्वस्य स्वेन साधर्म्यं नान्वेतीति व्युत्पत्तेः, अनन्वयिनोप्यर्थस्याभिधानं सदृशान्तरव्यवच्छेदेनानुपमत्वद्योतनायेन्दुरिन्दुरिव श्रीमानित्युक्ते श्रीमत्वेन चन्द्रस्य नान्यः सदृशोस्तीति सदृशान्तरव्यवच्छेदो लक्ष्यते ततश्च स्वेनापि सादृश्यासम्भवादनुपमेयत्वे पर्यवसानम्।

यथा वा—गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव ॥
पूर्वोदाहरणे श्रीमत्वस्य धर्मस्योपादानमस्ति इह।
गगनादिषु वैपुल्यादे धर्मस्य तन्नास्तीति शेषः ॥ ११ ॥

अनन्वयपदप्रवृत्तिनिमित्तमाह—वर्ण्यमानमपीति, नान्वेतीति, न सम्बध्यत इत्यर्थः। साधर्म्यस्य भेदघटितत्वादिति भावः। नन्वेवमत्यसम्बद्धप्रलापत्वापत्तिरित्यत आह—अनन्वयिनापीति, बाधितस्यापीत्यर्थः। अर्थस्य साधर्म्यस्य अभिधानम् आहार्यारोपरूपतया प्रतिपादनं सदृशान्तरव्यवच्छेदेन सदृशांतरव्यावृत्तिबोधद्वारेण। एतदेव विशदयति—इन्दुरित्यादिना, इत्यत्र सदृशान्तरवारावृत्तिस्तवनद्वारानुपमत्वद्योतनरूपप्रयोजनवत्वादापाततोरुद्ररोदनार्थवादवत् द्वारमात्रतया सादृश्यप्रतिपादनेपि नासम्बद्धप्रलापतापत्तिरिति भावः।

उदाहरणान्तरमाह—यथावेति, गगनाकारं गगनसदृशम्; इवेत्यतः प्राक् युद्धमित्यध्याहार्य्यम् उदाहरणान्तरप्रदर्शने बीजमाह—पूर्वोदाहरणेति, वैपुल्यादेरित्यादिपदात् गाम्भीर्यदारुणत्वयोः सङ्ग्रहः ॥ ११ ॥

इत्यनन्वयप्रकरणम् ॥

पर्य्यायेण द्वयोस्तच्चेदुपमेयोपमा नता।
धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि॥१२

द्वयोः पर्यायेणोपमानोपमेयत्वकल्पनं तृतीयसदृश व्यवच्छेदार्थं धर्मार्थयोः कस्यचित्केनचित्सादृश्ये वर्णिते

अथोपमेयोपमां लक्षयति—पर्य्यायेणेति अयौगपद्येनेत्यर्थः, वाक्यभेदेनेति यावत्; तत् उपमानोपमेयत्वं विवक्षितइति शेषाच्चापि बोधः, उपमेयोपमेति लक्ष्यनिर्देशः उपमेयेनोपमेति व्युत्पत्तेः, धर्मोऽर्थइवेत्युदाहरणम्। अर्थोधनं, पूर्णश्रीः पूर्णसमृद्धिः। अत्र च धर्मार्थयोर्द्वयोर्वाक्यभेदेन उपमानत्त्व मुपमेयत्त्वञ्च वर्णितं तत्रादावाक्येऽर्थस्योपमानत्त्वं धर्मस्योपमेयत्त्वं द्वितीयेतु तद्विपर्ययासेन धर्मस्योपमानत्त्व मर्थस्योपमेयत्त्वमिति लक्षणसमन्वयः। उपमानोपमेयत्त्वमात्रोक्तावनन्वयेऽतिव्याप्तिं द्वयोरितुरक्तम्, एवमपि 'समत्वं शरदि प्रापुरह्नो कुमुदतारका' इतुभयविश्रान्तसादृश्यायामुपमायामतिव्याप्तिः, तत्र द्वयोः कुमुदतारकयोः सादृश्याश्रयत्वरूपो पमेयत्वस्येव तत्प्रतियोगित्वरूपस्योपमानत्वस्याप्यर्थतः प्रतीतेरतःपर्य्यायेणेतुरक्तम्। ननु भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कान्तिरतिविमलेतिरशनोपमायामतिव्याप्तिः? तत्र द्वयोर्मतिचेष्टयोर्वाक्यभेदेनोपमानोपमेयत्ववर्णनादितिचेत्—न, द्वयोरित्यनेन परस्पर मुपमानोपमेयत्वस्य विवक्षितत्वात्, अन्यथा पर्य्यायपदेनैवानन्वयवारणे तद्वैयर्थ्यापत्तेरितिसंक्षेपः। ननूपमाप्रतीपोभयरूपाया उपमाद्वयरूपाया वा उपमेयोपमाया अलङ्कारान्तरत्वे किंवीजमित्यत आह—द्वयोरिति, तथा चार्थविशेषद्योतकतया चमत्कृतिवैलक्षण्य मेव तत्र बीजमिति भावः।

कथं तृतीयसदृशव्यवच्छेदलाभ स्तत्राह—धर्म्मार्थयोरिति,

तस्याप्यनेन सादृश्यमर्थसिद्धमपि मुखतो वर्ण्यमानं तृतीयसदृशव्यवच्छेदं फलति। यथा वा—

खमिव जलं जलमिव खं हंस इव चन्द्रश्चन्द्र इव हंसः।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥

पूर्वत्र पूर्णश्रीरिति धर्म उपात्तः इह निर्मलत्वादिधर्मो नोपात्त इति भेदः। उदाहरणद्वयेऽपि प्रकृतयोरेवोपमानोपमेयत्वकल्पनं रात्रि धर्म्मार्थसमृद्धेः शरदि गगनसलिलादिनैर्मल्यस्य च वर्णनीयत्वात् प्रकृताप्रकृतयोरप्येषा सम्भवति।

यथा—गिरिरिव गजराजोऽयं
गजराज इवोच्चकैर्विभाति गिरिः।
निर्झर इव मदधारा
मदधारेवास्य निर्झरः स्रवति॥ १२ ॥

धर्मार्थयोर्मध्य इत्यर्थः। मुखतः शब्देन, तथाच प्राप्तस्य पुनर्वचनं तदितरपरिसङ्ख्यार्थमितिन्यायादिहापि तृतीयसदृशव्यावृत्तिलाभ इति भावः। खमिवेति शरद्वर्णनमिदं खमाकाशमिव जलं कालुष्यापगमनेन निर्म्मलत्वातिशयात्, शेषं स्पष्टं; निर्म्मलत्व दित्यादिपदेन शैत्यातिशयपरिग्रहः। गिरिरिवेति, अत्र गजः प्रकृतः, अयमिति प्रकृतपरामर्शिः सर्वनामनिर्दिष्टत्वात् अतएवोपक्रमादग्रेऽप्यस्य मदधारेत्यन्वयो बोध्यः; अत्र पूर्वार्द्धे उच्चकैर्विभातीति समानधर्म्मउपात्तः, उत्तरार्द्धे च स्रवतीति सउक्त इति दिक्॥ १२ ॥

॥ इत्युपमेयोपमाप्रकरणम् ॥

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम्।
त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः॥ १३॥

प्रसिद्धोपमानोपमेयभावःप्रातिलोम्यात्प्रतीपं। यथा वा—

प्रतीपमिति, लक्ष्यनिर्देशः ननूपमानोपमेयभावस्य वैवचित्ततया मुखादेरप्युपमानत्वसम्भवाच्चन्द्रइव मुखमित्युपमायामतिव्याप्तिरित्यत आह—प्रसिद्धेति, प्रसिद्धोपमानस्य उपमेयभावः उपमेयत्वं प्रतीपं प्रतीपपदवाच्यं कुतः प्रातिलोम्यात् प्रसिद्धोमानप्रतिकूलत्वात् उपमेयभावप्रातिलोम्यादित्यविसर्गपाठेपि प्रसिद्धोपमानस्य यदुपमेयभावस्तस्यप्रातिलोम्यादुपमानप्रतिकूलत्वादुपमानस्योपमेयत्वकल्पनं प्रतीपमित्युच्यत इति व्याख्येयं, न तु प्रसिद्धस्योपमानोपमेयभावस्य वैपरीत्यादिति यथाश्रुतरीत्या, एवंविध प्रातिलोम्यस्य तृतीयपञ्चमप्रतीपभेदाव्यापित्वेनप्रतीपपदप्रवृत्ति निमित्तत्वायोगादिति; एवं चोक्तप्रकारेणोपमानप्रतिकूलस्य, प्रतीपपदप्रवृत्ति निमित्तत्वकथनेन प्रसिद्धोपमानप्रतिकूलधर्म्मः, प्रतीपमितिप्रतीपपञ्चकसाधारणं सामान्यलक्षणमिति सूचितम् अतएव पञ्चमप्रतीपव्याख्यानावसरे वक्ष्यति उपमानप्रातिलोम्यादिति। प्रतिकूलत्वञ्च तिरस्कारप्रयोजकत्वम् एतस्य च सकलप्रतीपभेदसाधारण्यं तत्र तत्र स्फुटीकरिष्यते।

यथावेति, प्रोषितस्य प्रियां प्रति वियोगवेदनानिवेदनमिदं, अयि प्रिये! त्वदीयसादृश्येन विनोदनं विनोदो विरहयापनम् तन्मात्रमपि मम दैवेन न क्षम्यते, एतदेव दर्शयति— यदित्यादिना, त्वन्नेत्रयोः समानासाधारणी कान्तिः शोभा यस्य तथाविधं यदिन्दीवरं तत्सलिले मग्नं वर्षतु ना जलदैः

यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरं ।
मेघैरन्तरितः प्रिये ! तव मुखच्छायानुकारी शशी ॥
येपि त्वद्गमनानुसारिगतयस्ते राजहंसा गताः ।
त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ १३॥

अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् ।
अलं गर्वेण ते वक्त्र कान्त्या चन्द्रोपि तादृशः ॥ १४

अत्युत्कृष्टगुणतया वर्ण्यमानस्यान्यत्र स्वसादृश्यमसह्यमानस्योपमेयं किञ्चित्प्रदर्श्य तावतात्र तस्य तिरस्कारो द्वितीयं प्रतीपं पूर्वस्मादपि विच्छित्तिविशेषशालि

तव मुखस्य छायया कान्त्या अनुकारी सदृशः शशी मेघैरन्तरितस्तिरोहितः । येपीत्यपिभिन्नक्रमः त्वद्गमनसदृशगतयो ये राजहंसास्तेपि गताइति ; अत्र कान्त्यादिधर्मोपादानात्पूर्वोदाहरणवैलक्षण्यं बोध्यम् । ननूपमानादुपमेयस्याधिक्यवर्णनारूपात् व्यतिरेकालङ्कारादस्य को भेदः ? उच्यते—तत्र वैधर्म्यप्रयुक्तमुपमेयस्याधिक्यं विवक्षितमिह तूपमानतामात्रप्रयुक्तत्वात्साधर्म्यप्रयुक्तमिति ॥ १३ ॥

प्रतीपान्तरमाह—अन्योपमेयेति, अन्यद् वर्ण्यं उपमानं तद्रूपं यदुपमेयं तस्य लाभेन वर्णनीयस्य मुखादेरनादरो गर्व्वपरिहारोपि तत् प्रतीपमित्यर्थः ; तस्य गर्वप्रसक्तिपूर्व्वकत्वेनोपमेयताया अपि पूर्व्वमप्राप्तया उपमाननिरस्कृतिविशेषप्रयोजकत्वादितिभावः ; अतएव लाभेनेत्युक्तं नतु सत्वेनेति । अप्राप्तप्राप्तिलोभशब्दार्थत्वात् । विच्छित्तिविशेषेति चमत्कारोत्कर्षेत्यर्थः ;

यथा वा—

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे ! ।
सन्तीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि॥१४

वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः।
कः क्रौर्यदर्पस्ते मृत्यो ! त्वत्तुल्याः सन्ति हि स्त्रियः॥१५

अत्यतकृष्टगुणतया क्वचिदप्युपमानभावमसहमानस्या वर्ण्यस्य वर्ण्यमुपमेयं परिकल्प्य तावता तस्य तिरस्कारः पूर्वप्रतीपवैपरीत्येन तृतीयं प्रतीपम्।

यथा वा—अहमेव गुरुः सुदारुणाना
मिति हालाहल मा स्म तात ! दृप्य।
ननु सन्ति भवादृशानि भूयो
भुवनेस्मिन्वचनानि दुर्जनानाम्॥ १५॥

वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत्।
मुधापवादोमुग्धाक्षि ! त्वन्मुखाभं किलाम्बुजम्॥ १६

उक्तरीत्योपमानतिरस्कारातिशयप्रतीतेरिति भावः। गर्वमिति, असंवाह्यं संवहनायोग्यम् अपरिमितमिति यावत्। भद्रे शोभने इति सम्बोधनं, नन्विति हेत्वर्थे अव्ययानामनेकार्थत्वात्; पूर्व्वोदाहरणे कान्त्येति समानधर्मोपादानमिह तु नेति भेदः॥१४॥

वर्ण्योपमेयेति, अन्यस्यावर्ण्यस्य अनादरोपि तथा प्रतीपमित्यर्थः। अहमेवेति, सुदारुणानामतितीव्राणां गुरुः श्रेष्ठः, तातेति सानुकम्पसम्बोधने, मा स्म दृप्य इतिदर्पं मा कृथा इत्यर्थः॥१५॥

वर्ण्येनान्यस्येति, निरूपितत्वं तृतीयार्थः वर्ण्यनिरूपितायान्यस्यावर्ण्यस्योपमा तस्याइत्यर्थः अनिष्पत्तिवचः उच्यमाना अनिष्पत्तिः कृदभिहितइतिन्यायात् तत्प्रतीपं। मुधेति किलेतिवार्तायां

अवर्ण्ये वर्ण्योपमाया अनिष्पत्तिवचनं पूर्वस्य उत्कर्षशालि चतुर्थं प्रतीपम्। उदाहरणे मुधापवादत्वोक्त्योपमित्यनिष्पत्तिरुद्घाटिता।

यथा वा—आकर्णय सरोजाक्षि! वचनीयमिदम्भुवि।
शशाङ्कस्तववक्त्रेण पामरैरुपमीयते॥ १६॥

प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते।
दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना॥१७

त्वन्मुखाभमम्बुजमिति वार्ता। मुधा निष्प्रयोजनापवादः अलीकार्थकत्वेनापवादस्यनिष्प्रयोजनत्वम्। उत्कर्षेति, उपमानतिरस्कारातिशयप्रयोजकत्वरूपेत्यर्थः। मुधापवादत्वोक्त्येति, उक्तार्थेन्नित। आकर्णयेति, वचनीनम् अलीकतयानिन्दितम् अतएव भुवीत्युक्तं लोकान्तरे मुखासन्निधानेन विशेषादर्शनादलीकत्वग्रहायोगात् सन्निधानेपि विशेषाग्रहणात्पामरैरित्युक्तम्। अत्र वचनीयपामरैरितेरताभ्यामुपमितेरनिष्पत्तिः प्रकाश्यते॥ १६॥

प्रतीपमिति, कः अर्थः प्रयोजनं यस्य तत्तथा अनर्थकमिति यावत्तस्य भावः कैमर्थ्यं तदपि प्रतीपं मन्वते आलङ्कारिकाइति शेषः। ननूपमानस्य पद्मचन्द्रादेराह्लादविशेषरूपप्रयोजनवत्त्वात् कथमनर्थकत्वमत आह—उपमेयस्यैवेति, उपमानधूर्वहत्वेन उपमानकार्यकारित्वेन अयञ्चोपमानकैमर्थ्ये हेतुः अतश्चोपमानकैमर्थ्य मित्यध्याहार्यम् आह्लादविशेषादेरन्यलभ्यत्वेन प्रयोजनत्वासम्भवात्कैमर्थ्यमिति भावः। उपमानप्रयोजकधूर्वहत्वेनेतिपाठे उपमानं प्रयोजकं यस्यादिति बहुव्रीहिः। ननूपमानकैमर्थ्यस्योपमानाक्षेपस्याक्षेपइति वामनसूत्रेणाक्षेपालङ्कारत्वेनोक्तत्वात् कथं प्रतीप-

उपमेयस्यैवोपमानधूर्वहत्वेनोपमानकैमर्थ्यमुपमानप्रातिलोम्यात् पञ्चमं प्रतीपम्॥

यथा वा—तदोजसस्तद्यशसः स्थिताविमौ
वृथेति चित्ते कुरुते यदा यदा।
तनोति भानोः परिवेषकैतवात्
तदा विधिः कुण्डलनां विधोरपि॥

केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वे न

स्वमत आह—उपमानप्रातिलोम्यादिति उपमानप्रतिकूलत्वादित्यर्थः प्रतिकूलत्वं च तिरस्कारप्रयोजकत्वमित्युक्तं तथा च प्रतीपसामान्यलक्षणाक्रान्तत्वात्प्रतीपान्तर्भाव एवोचित इति भावः। तदोजस इति, नैषधीये नैषधवर्णनमिदं विधिर्ब्रह्मा तस्य नलस्योजसः प्रतापस्य तद्यशसश्च स्थितौ सत्यां इमौ सूर्यचन्द्रौ वृथा प्रतापज्योत्स्नादेः कार्यस्य ताभ्यामेवोपपत्तेर्निरर्थकाविति चित्ते यदा यदा कुरुते तदा भानोर्विधोश्च परिवेषस्य परिधेः कैतवाच्छलात् कुण्डलानां वैयर्थ्यसूचिकां रेखावेष्टनां करोतीत्यन्वयः। अत्र च नायं परिवेषः किन्तु कुण्डलनेत्यपह्नुतौ कैमर्थ्यरूपप्रतीपस्याङ्गत्वात्तयोरङ्गाङ्गिभावलक्षणः सङ्करः यद्यप्यपमितयादिवच्च तत्पदवीप्राथम्याकरणं न दोष इति बोध्यं। केचिद्दण्डीप्रभृतयः।

अनन्वयोपमाप्रतीपानामिति प्रतीपपदेन चाद्याद्यभेदत्रयमेव गृह्यते न त्वन्त्यभेदद्वयमपि तत्रोपमितिक्रियानिष्पत्तेरभावेनोपमान्तर्भावस्यासम्भवात्, वस्तुतस्त्वाद्यभेदत्रयस्यापि नोपमान्तर्गतिर्युक्ता, चमत्कारं प्रति साधर्म्यस्य प्राधान्येनाप्रयोजकत्वात्, सामर्थ्यनिबन्धन उपमानतिरस्कार एव हि तत्र चमत्कृतिप्रयोजकतया

अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात्।
अयमास्ते विना शम्भुस्तार्तीयीकं विलोचनम् ॥१९॥
शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम्।
अस्यामुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ॥ २०॥

लेपेनपाण्डुरीकरणं विधोरिति निदर्शनावारणाय त्रिम्बाविशिष्टेति संशयोत्प्रेक्षयो निरासाय निश्चयेतुरुक्तमिति संक्षेपः। आधिक्ये त्यादि, आधिक्यमुपमानस्य स्वाभाविकीमवस्थामपेक्ष्योपमेयता दात्म्यावस्थायां बोध्यम्। एवं न्यूनत्वमपि अनुभयम्, आधिक्यन्यूनत्वोभयरहितम् अभेदताद्रूप्यान्यतरमात्रम् ॥ १८ ॥

अयं हीत्यादि, अयं वर्ण्यमानो राजा येन हेतुना पुरः नगर्यः शिवस्यापि त्रिपुरदग्धृत्वात्स एवायमिति भावः। तार्तीयीकमिति तृतीयमेव तार्तीयीकं 'तीयादीकक् स्वार्थे वाच्यः' इति वार्तिकानुसारात् विलोचनं त्रिनेत्यन्वयः ॥ १९ ॥

शम्भुरिति, अत्राप्ययमित्यनुषञ्जनीयम् अन्यथाऽतिशयोक्त्यापत्त्या रूपकोदाहरणत्वासङ्गतेः। अद्य राजभावावस्थायां समदृष्टितां समसङ्ख्यलोचनताम् एकरूपलोचनवत्त्वाच्च। मुखेन्दुनेति, अत्रेन्दुपदमिन्दुकार्य्यकारिपरं। किमिन्दुनेति, प्रसिद्धचन्द्राद्भेदविवक्षणात् अतश्चन्द्रताद्रूप्यरूपकमिदं, न चात्रोत्तरपदार्थप्राधान्यादिन्दुकार्यकारिणि मुखाभेदभानान्मुखाभेदरूपकं स्यात्। न तु चन्द्रताद्रूप्यरूपकमिति वाच्यं, व्युत्पत्तिवैचित्र्येण मुखस्य स्वनिष्ठाभेदप्रतियोगित्वसंसर्गेणान्वयाभ्युपगमात् विशेषणानुयोगिकस्यापि विशेषणसम्बन्धतायाः स्वामित्वस्य षष्ठ्यर्थत्ववादिभिः प्राचीनैश्चैवस्य धनमित्यादावङ्गीकारात् एवं च मुखनिष्ठाभेदप्रतियोगी चन्द्रस्तत्-

साध्वीयमपरा लक्ष्मीरसुधासागरोदिता।
अयञ्च कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते ॥ २१॥

विषय्युपमानभूतं पद्मादि विषयस्तदुपमेयं वर्णनीयं मुखादि विषयिणो रूपेण विषयस्य रञ्जनं रूपकम् अन्यरूपेण रूपवतः करणात् तच्च क्वचित्प्रसिद्धविषय्यभेदपर्यवसितम्। क्वचिद्भेदे प्रतीयमान एव तदीयधर्म्मारोपमात्रपर्यवसितम्। ततश्च रूपकं तावद्द्विविधम्—अभेदरूपकन्ताद्रूप्यरूपकञ्चेति। द्विविधमपि प्रत्येकन्त्रिविधम्। प्रसिद्धविषय्याधिक्यवर्णनेन न्यूनत्ववर्णनेनानुभयोक्त्या चैवं रूपकं षड्विधम्। अयं

कार्य्यकारी वेति बोधान्न मुखाभेदरूपकापत्तिः मुखप्रतियोगिकभेदसाभानादिति। एवमन्यत्रोह्यम् ॥ २०॥

असुधेति, सुधासागरादुदिता उत्पन्ना प्रसिद्धा लक्ष्मीः इयन्तु न तथेति न्यूनत्वोक्तिः। अतिरिच्यतइति, निष्कलङ्कतया अधिको भवतीत्यर्थः ॥ २१॥

लक्षणश्लोकं व्याचष्टे—विषय्युपमानेत्यादि, विषयिणोऽभेदेनरूपेण चेति पाठः। रूपेण आह्लादकत्वादिना ताद्रूप्येण क्वचित्ताद्रूप्येण चेत्यत्र पाठः परमार्थतस्तु प्रामाणिकपुस्तकेषु विषयिणो रूपेण विषयस्य रञ्जनमिति युक्ततरः पाठः तेन तच्चेत्यादेर्न पौनरुक्त्यमिति ध्येयम्। हरिद्रादिना पटादिरञ्जने प्रयुक्तस्य रञ्जनशब्दस्येह प्रवृत्तौ बीजमाह— अन्यरूपेणेति, रूपं रक्तपीतादिकम् अभेदताद्रूप्ये च तथा चान्यदीयधर्मेणान्यस्य तद्वत्तासम्पादनत्वसामान्यादिह गौण्या रञ्जन-

हीत्यादिसार्द्धश्लोकेनाभेदरूपकाणि अस्यामुखेन्दु-नेत्यादिसार्द्धश्लोकेन ताद्रूप्यरूपकाणि आधिक्य-न्यूनत्वानुभयोक्त्युद्देशक्रमप्रातिलोम्येनोदाहृतानि-येन दग्धा इति विशेषणेन वर्णनीये राज्ञि प्रसि-द्धशिवाभेदानुरञ्जनाच्छिवस्य पूर्वावस्थातो वर्ण-नीयराजभावावस्थायां न्यूनत्वाधिक्ययोरवर्णना-च्चानुभयाभेदरूपकमाद्यं। तृतीयलोचनप्रहाणोक्त्या-पूर्वावस्थातो न्यूनताप्रदर्शनान्न्यूनाभेदरूपकं द्वि-तीयं। न्यूनत्ववर्णनमपि अभेददार्ढ्यापादकत्वा-च्चमत्कारिविषमदृष्टित्वपरित्यागेन जगद्रक्षकत्वोक्त्या शिवस्य पूर्वावस्थातोवर्णनीयराजभावाया मुत्कर्ष-विभावनादधिकाभेदरूपकम् तृतीयम्। एवमुत्तरेषु ताद्रूप्यरूपकोदाहरणेष्वपि क्रमेणानुभयन्यूनाधिक-

शब्दप्रयोग इति भावः। तच्चेति, रञ्जनञ्चेत्यर्थः। प्रसिद्धेति, कविसम्प्रदायप्रसिद्धोपमानाभेदेन लब्धात्मक मित्यर्थः। रूप-पदस्याभेदताद्रूप्योभयसाधारणत्वादिति भावः; अभेदेन रूपेण चेति पाठे तु तत्रेत्यत्र च शब्दो हेत्वर्थकः, तेन पूर्वोक्तस्यैव समर्थन मिति न पौनरुक्त्यं तावद्विधान्तरोक्तेः प्र,क् उद्देशक्रमप्राति-लोम्येनेति निर्देशक्रमवैपरीत्येनेत्यर्थः। एतदेव विशदयति—येनेत्यादि, विशेषणेनेति हेतौ तृतीया पुरदग्धृत्वविशेषणहेतुक-शिवाभेदानुरञ्जनादित्यर्थः। ननु न्यूनत्ववर्णने भेदापकर्षयोः प्रतीतेः कथं चमत्कारित्वमित्यत आह —अभेददार्ढ्यापादकत्वादिति,

भावा उन्नेयाः अनेनैव क्रमेणोदाहरणान्तराणि—

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् शरय्वा,
वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित्॥
एको वक्ति प्रथमनिहतं कैटभं कंसमन्यः,
तत्त्वं स त्वं कथय भगवन्! कोहतस्तत्र पूर्वम्॥

अत्र सत्त्वमित्यनेन य. कंसकैटभयो र्हन्ता गरुडध्वज-स्तत्तादात्म्यं वर्णनीयस्य राज्ञः प्रतिपाद्य तं प्रति कंसकैटभवधयोः पौर्व्वापर्य्यप्रश्नव्याजेन तत्तादात्म्य दार्ढ्यकरणात् पूर्व्वावस्थात उत्कर्षापकर्षयोरविभावनान्नानुभयाभेदरूपकम्।

विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकतया निखिलव्यतिरिक्तसकल गुणशालिता प्रतीतावेकदेशविकृतमनन्यवद्भवतीति न्यायेनाभेद निश्चयसम्पादकत्वादिति भावः। विभावनात् प्रकाशनात्। चन्द्रज्यो त्स्नेति, राजानम्प्रति कस्यचिदुक्तिः—हे भगवन्! चन्द्रज्योत्स्नावत् विशदं श्वेतं पुलिनं यस्य तथा भूतेऽस्मिन् शरय्वाः शरयूनामक-नद्याः सैकते सिकतामयदेशे कयोश्चित्सिद्धतरुणयोः चिरतरं अति चिरकालं वादरूपं द्यूतमभूत्। कीदृक्? तत्राह—एकः सिद्धयुवा कैटभं दैत्यविशेषं प्रथमं निहितं वक्ति वदति। अन्यः कंसं प्रथमं निहितं वक्ति, सः कंसकैटभयोर्निहन्ता त्वं तत्र तयोर्मध्ये पूर्वं को हत इति तत्त्वं कथयेत्यन्वयः। यद्यपि मुनिप्रश्नावेव भगवन्निति सम्बोधनमुचितम् न राजादौ तथापि राज्ञो भगवत्तादात्म्यवर्णना-दनौचित्यं परिहरणीयं क्वचित्तु भवतेति पाठः। अत्र ज्योत्स्नापदे-नैव चन्द्रिकालाभेऽपि चन्द्रपदं शारदपूर्णचन्द्रपरतया नापुष्टार्थं

वेधाद्वेधाभ्रमं चक्रे कान्तासु कनकेषु च।
तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः॥

अत्र साक्षादिति विशेषणेन विरक्तस्य प्रसिद्धशिव-तादात्म्य मुपदिश्य नराकृतिरिति दिव्यमूर्त्तिवैकल्य प्रतिपादनान्न्यूनाभेदरूपकम्।

त्वय्यागते किमिति वेपत एष सिन्धुः,
त्वं सेतुमन्थकृदतः किमसौ बिभेति।
द्वीपान्तरेऽपि न हि तेऽस्त्यवशम्बदोद्य,
त्वां राजपुङ्गव! निषेवत एव लक्ष्मीः॥

अत्र त्वं सेतुमन्थकृदिति सेतोर्मन्थनस्य च कर्त्ता पुरुषोत्तमेन सह वर्णनीयस्य तादात्म्य मुक्त्वा तथापि

पुष्पमालेनात्र पुष्पपदमिवोत्कृष्टपुष्पपरतयेति बोध्यम्। वादयो-ग्यतासूचनाय युनोरित्युक्तम्। अयं हीत्यूदाहरणेऽभेदारोपहेतुभूतं पुरदाहकत्वरूपं साधर्म्यमुपात्तम् इह तु जगद्रक्षकत्वादिकं तत् गम्यमानमितिभेदः। वेधा इति, द्वेधा कान्ताधर्मिकत्वकनकधर्मि-कत्वरूपविधाद्वययुक्तं भ्रमं बलवदनिष्टाननुबन्धि सुखसाधनत्व-भ्रमं सर्वेषामपि भ्रमाणां वेधसा निर्माणेऽपि प्राधान्यविवक्षयेत्य मभिधानम्। अयमास्त इत्युदाहरणे शम्भुसादृश्यं गम्यमानमिह-त्वनासक्तिरूपं तदुपात्तमिति भेदः। त्वय्यागतइति राजानं प्रति कवेरुक्तिः सेतुश्च मन्थश्चेति द्वन्द्वः, मन्थनं मन्थः, अमृतमन्थनं द्वीपान्तरेपीत्यपिना सुतरामेतद्द्वीपे नास्तीति सूच्यते अद्य राजभावावस्थायां शम्भुर्विश्वमित्यत्र विश्वसंरक्षकत्वं सादृश्य मुपात्तम् इहतु नेति भेदः॥

त्वदागमनं मेतुबन्धाय मन्थनाय वेति समुद्रेण न भेतव्यं द्वीपान्तराणामपि त्वदम्बदत्वेन पूर्ववत् द्वीपान्तरे जेतव्याभावात्प्राप्तलक्ष्मीकत्वेन मन्थनप्रसक्त्यभावाच्चेति पूर्वावस्थातउत्कर्षविभावनादधिकाभेदरूपकम्॥

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किम्
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम्।

किं पद्मस्येति' दयितां प्रति नायकोक्तिः। तत्र वक्त्ररूपे इन्दे कार्य्यकारिणि सति अयमपरः प्रसिद्धः शीतांशुश्चन्द्रः यत् उज्जृम्भते उदितो भवति तस्मात्त्वं वक्त्रेन्दुः पद्मस्य रुचिं कान्तिं किं न हन्ति प्रयोजन मनुद्दिश्य न मन्दोपि प्रवर्त्तत इति न्यायात् प्रयोजनस्यान्यतः सम्भवे तदुज्जृम्भणस्यासङ्गतेरिति किं न हन्तीति काक्का अपितु हन्त्येवेति पर्य्यवसाने तदुज्जृम्भणं वृथेति प्रतीतिपर्य्यवसानम् एवमग्रिमवाक्ययोरपि। झषोमकरः केतनं चिह्नमस्य तथाभूतस्य समुद्रस्य कामस्य च आलोकनमालोकः प्रकाशश्च तस्मात्तेण अमृतेन दर्पोभिमानः उज्जृम्भणहेतुः स्याच्चेत्! अयुक्तमेतत्, यतः इहैव वक्त्रेन्दौ बिम्बाधरे तदप्यस्त्येवेति समुचितपदाध्याहारेण योजनीयं यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दाक्षेपचमत्वान्न तदनुपादानेपि न्यूनपदत्वदोषः कार्य्यकारित्वमात्रेणाभेदव्याप्तिः। अस्या मुखेन्दुनेत्तात् किमिन्दुनेति पुनरुपादानमात्रं भेदविवक्षाज्ञापकम् इह त्वपरशब्दस्याप्युपादानमिति विशेषः। अ नतुर्वदन इति, बादरायणोव्यासः, लाभे लोचनं यस्येति

वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते,
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥

अत्रापरः शीतांशुरित्यनेन वक्त्रेन्दोः प्रसिद्धचन्द्राद्भेदमाविष्कृत्य तस्य च प्रसिद्धचन्द्रकार्य्यकारित्वमात्रप्रतिपादनेनोत्कर्षापकर्षयोरप्रदर्शनादनुभयं ताद्रूप्यरूपकम् ।

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शम्भुर्भगवान् बादरायणः ॥

व्यधिकरणत्वेऽपि गमकत्वात्तद्धितः । ननु हरावपर इति विशेषणात् तदंश एव ताद्रूप्यरूपकं स्यात् । इतरांशेत्वभेदरूपकमेवेत्याशङ्क्याह—

अत्रेति विश्वपीति, एकत्रानेकारोपरूपायां रूपकमालाया मवैरूप्याय तात्पर्य्यग्राहक एकत्रस्थितस्यापि साधारण्यमेवोचितमिति भावः । अयमेव च साध्वीतादि पूर्व्वोदाहरणाद्विशेषः । न्यूनरूपकस्य चमत्कारित्वं पूर्व्वमुक्तं वृद्धसम्मतया दृढयति—इदमिति, यदाह्लितानन्तरं स इति शेषः । एकगुणहानौ अभिहिताया मिति शेषः । गुणसाम्यदार्ढ्यं शेषगुणप्रयुक्तसाम्यायोगव्यवच्छेदः चतुर्वदनत्वाद्येकगुणव्यतिरेकस्य प्रमाणान्तरसिद्धस्य पुनर्वचनं शेषगुणाभावपरिसङ्ख्यार्थं पर्य्यवस्यतीति भावः । अत्र च रूपक-प्रभेदकत्वेनैव चमत्कारोपपत्तौ नालङ्कारान्तरत्वं न्यूनत्ववर्णनस्य युक्तं सामग्रीकालीनकार्य्याभावस्य त्वलङ्कारान्तरासंभिन्नस्य तद्वक्ष्यमाणं युक्तमित्यस्वरसो मतमितानेन सूचितः ।

अत्र हरानपर इति विशेषणात्त्वपि ताद्रूप्यमात्र विवक्षा विभाविता चतुर्वदनत्वादेः ऐकल्प्यञ्चोक्त मिति न्यूनताद्रूप्यरूपकम् इदं विशेषोक्त्युदाहरण मिति वामनमतम्। यदाह—'एक गुणहानौ गुणसाम्यदार्ढ्यं विशेषोक्तिरिति ।

किमसुभिर्ग्लपितैर्जड़ मन्यसे,
मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां,
नलमुखेन्दुपरां विबुधः स्मरः ॥

किमसुभिरिति, जड़ेति, मूर्खजलमयेति साधारणं चन्द्रसम्बोधनं, ग्लपितैर्नष्टैरसुभिर्निमित्तभूतैर्भीमसुताया दमयन्त्या मनः मयि निमज्जतु निलीयतामिति मन्यसे, किमिति सोपहासकाकुः, तन्नैव मंस्था इत्यर्थः, अत्र हेतुमाह—किल निश्चितं मम विबुधः पण्डितः स्मरः तदर्थिकां प्राणनिर्गमकालीनमनःप्रवेशः अर्थोयस्यास्तां श्रुतिं नलमुखेन्दुपरां मनःप्रवेशाधिकरणत्वेन नलमुखचन्द्रतात्पर्यवतीमाहेति अयञ्चलङ्घिन इत्युदाहरणे दोषशून्यत्वप्रयुक्तं शाब्दमाधिक्यम् इह तु गुणविशेषप्रयुक्तं गम्यमानन्तदिति विशेषः। सावयवत्वनिरवयवत्वादित्यादिना समस्तवस्तुविषयत्वादिरूपैः तत्प्रभेदानां परम्परितत्वरूपभेदान्तरस्य च परिग्रहः। तथाहि सावयवं निरवयवं परम्परितञ्चेति त्रिविधं रूपकं प्रत्येकं क्रमेण द्विविधं समस्तवस्तुविषयम् एकदेशविवर्त्ति च, केवलं माला च, श्लिष्टवाचकम्

अत्र दमयन्तीकृतचन्द्रोपालम्भे प्रसिद्धचन्द्रो न निर्याणकालिकमनःप्रवेशश्रुतितात्पर्यविषयः किन्तु नलमुखचन्द्र एवेति ततोऽस्याधिक्यप्रतिपादनादधिकतादृप्यरूपकम्। रूपकस्य सावयवत्व-निरवयत्वादिभेदप्रपञ्चनन्तु चित्रमीमांसायां द्रष्टव्यम्॥ २१॥

अश्लिष्टवाचकञ्चेति, श्लिष्टाश्लिष्टभेदयोः केवलमालारूपत्वाभ्यामत्यश्चतुर्विधमितराष्टौ भेदाः तत्—

ज्योत्स्नाभस्मच्छुरणधवलाबिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिकारात्रिकापालिकीयम्।
द्वीपात् द्वीपं भ्रमति दधती चन्द्रमुद्रा कपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन इति॥

पद्ये रात्रौ कापालिकीत्वारोपस्य प्रधानतयावयविनोऽवयवरूपाणि ज्योत्स्नाभस्मेत्यादिरूपकाणीति सावयवत्वं समस्तस्य वस्तुन आरोप्यमाणस्य शब्दविषयत्वं च द्रष्टव्यम्। प्रौढमौक्तिकरुचः पयोमुचाम्बिदवः कुटजपुष्पवन्धवः विद्युतां नभसि नाट्यमण्डले कुर्वते स्म। कुसुमाञ्जलिश्रिय मित्यत्र प्रधानस्य नभसि नाट्यमण्डलत्वारोपस्यावयवभूतं विद्युतां नर्तकीत्वरूपणार्थं न शाब्दमित्येकदेशि विशेषेणशाब्दतया वर्तनादेकदेशविवर्तित्वं कुरङ्गीवाङ्गानि स्तिमितयतिगीतध्वनिषु यत्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् अनिद्रं यच्चान्तः स्वपिति तदहो वेद्माभिनवां प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिका मित्यत्रप्रेमलतिकामित्यमालारूपं निरवयवम्।

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः,
कान्तेः कार्मणकर्मनर्मरहसां मुल्लासनावासभूः।

विद्यावल्लिगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया,
बाणाः पञ्च शिलीमुखस्य ललनाचूडामणिः सा प्रिया॥

इत्यत्र च मालारूपं निरवयवमवबोध्यम् एवम् अलौकिकमहालोकप्रकाशितजगत्त्रयः स्तूयते देव! सद्वंशमुक्तारत्नं न कैर्भवानित्यत्र वेणुकुलयोः श्लिष्टेन वंशपदेन कुले वेणुत्वारोपपूर्वक एव राज्ञि मुक्तारत्नत्वारोप इति श्लिष्टवाचकं केवलपरम्परितरूपकं विद्वन्मानसेत्यादावेतदेव मालारूपं चतुर्दशलोकवल्लिकन्द इत्यत्राश्लिष्टवाचकं केवलपरम्परितं पर्यङ्को राजलक्ष्म्या इत्यादावालानं जयकुञ्जरस्येत्यादौ चाश्लिष्टवाचकं मालापरम्परितञ्च द्रष्टव्यं विस्तरभयान्नेह प्रपञ्चते॥ २१॥

॥ इत्यलङ्कारचन्द्रिकायां रूपकप्रकरणम्॥

— :o: —

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना।
प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥२२

यत्रारोप्यमाणो विषयी किञ्चित्कार्य्योपयोगित्वेन निबध्यमानः स्वतस्तस्य तदुपयोगित्वासम्भवात्प्रकृततात्मतापरिणतिमपेक्षते तत्र परिणामालङ्कारः।

अत्रोदाहरणं प्रसन्नेनेति। अत्र हि अब्जस्य वीक्षणोपयोगित्वं निबध्यते नतु दृशः मयूरव्यंसकादिसमासेन उत्तरपदार्थप्राधान्यात् न चोपमितसमासाश्रयणेन दृगब्जमिवेति पूर्वपदप्राधान्यमस्तीति वाच्यं प्रसन्नेनेति सामान्यधर्मप्रयोगादुपमितं व्याघ्रादिभिः सामान्याप्रयोग इति तदप्रयोग एवोपमितसमासानुशासनात् अब्जस्य वीक्षणोपयोगित्वं न स्वात्मना सम्भवति अत स्तस्य प्रकृतदृगात्मता परिणत्यपेक्षणात्परिणामालङ्कारः॥

परिणामं लक्षयति—परिणाम इति, विषयिनिष्ठायाः प्रकृतकार्योपयोगिताया अवच्छेदिकाविषयतात्मतापरिणतिः परिणामः, सा च विषयतादात्म्याध्यवसायविषयता। एवञ्च विषयाभेदस्यैव विषयिणि विवक्षणात् दृगभिन्नेनाब्जेनेति स्वारसिक एव बाधः, न तु रूपक इव दृङ्निष्ठाभेदप्रतियोगिनाब्जेनेत्यनुयोगित्वसुखदृति रूपकाद्भेदो बोध्यः।

असमासेऽप्युदाहरति—तीर्त्वेति, मुरारिनाटकगतमेतत्पद्यम्। आत्मना तृतीयः सीतालक्ष्मणसहितइति। यावत् असौ प्रक्रान्तो रामः भूतेशस्य भुजगवल्लीमालारूपाममरनदीङ्गङ्गां तीर्त्वा इत्य

यथा वा —

तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीयस्तस्मै सौमित्रिमैत्रीमयमुपकृतवानान्तरं नाविकाय।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ॥

अत्रारोप्यमाणश्चान्तरः सौमित्रिमैत्रीरूपतापत्त्या गुहोपकारलक्षणकार्योपयोगी न स्वात्मना गुहस्य रघुनाथप्रसादैकार्थित्वेन वेतनार्थित्वाभावा दिति परिणामालङ्कारः ॥ २२ ॥

नाविकाय गुहसंज्ञाय निषादपतये सौमित्रेर्लक्ष्मणस्य मैत्री रूपमान्तरमुपकृतवान् उपकाररूपतया दत्तवान्, अथा-नन्तरं चित्रकूटं प्रति प्रतस्थे प्रस्थितवान्। कीदृशः व्यामेन तिर्यक् प्रसारितभुजद्वयान्तरालेन ग्राह्यौ तावत्परिणाहौ स्तनौ यासां तथाभूताभिः शबराणां व्याधानां युवतिभिः कौतुकेनोदञ्चन्ति विकसन्त्यक्षीणि यत्र क्रियायां तथा कृच्छ्रात्कष्टात् अतएव क्षण-मन्वीयमानोऽनुगम्यमान इत्यर्थः ॥२२॥

॥ इति परिणामप्रकरणम् ॥

॥ षष्ठालङ्कारः समाप्तः ॥

बहुभिर्बहुधोल्लेखादेकस्योल्लेखइष्यते। •
स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः॥७

यत्र नानाविधधर्मयोग्येकं वस्तु तत्तद्धर्मयोगरूपनिमित्तभेदेन अनेकेन गृहीत्वा अनेकधोल्लिख्यते तत्रोल्लेखः। अनेकधोल्लेखने रुच्यर्थित्वभयादिकं यथार्हं प्रयोजकं रुचिरभिर[...]र्थित्वं लिप्सा स्त्रीभिरित्याद्युदाहरणं अत्रैक एव राजा सौन्दर्यवितरणपराक्रमशालीति कृत्वा स्त्रीभिरर्थिभिः प्रत्यर्थिभिश्च रुच्यर्थित्वभयैः कामकल्पतरुकालरूपो दृष्टः॥

अथोल्लेखालङ्कारं लक्षयति—बहुभिरिति, एकस्य बहुधोल्लेखादित्यन्वयः। उल्लेखनं विषयीकरणमुल्लेखः, हेतौ पञ्चमी, तथा चैवं विधोल्लेखाद्धेतोः रूपेणइष्यते उल्लेख इति व्यवह्रियत इत्यर्थः, व्यवहारं प्रति लक्षणस्य प्रयोजकत्वात्। स्त्रीभिरिति स्वर्द्रुः स्वर्गसम्बन्धी द्रुमः कल्पतरुः कालो यमः स प्रकृतो राजा श्लोकं व्याचष्टे— यत्रेति, नानाविधेति,सौन्दर्यदातृत्वशूरत्वादिरूपेत्यर्थः। तत्तद्धर्मेति रुच्यर्थित्वभयादिरूपेत्यर्थः। एतच्च स्वरूपकथनं न तु लक्षणान्तर्गतम्। ननु द्वाभ्यां गृहीतृभ्यां निमित्तद्वयवशात् प्रकारद्वयेनोल्लिखेऽव्याप्तिरत आह—अनेकेनेत्यादि, तथाच लक्षणे बहुपदमनेकपरमिति भावः। एवञ्च गृहीतृविषयाद्यन्यतमानेकत्वप्रयुक्तमेकस्योल्लिख्यमानानेकप्रकारत्वमुल्लेख इति लक्षणम्बोध्यम्। सौन्दर्यस्य तरङ्गिणीत्यादिमालारूपकवारणायाद्यं विशेषणं, तत्र गृहीतृभेदप्रयुक्तं नानेकप्रकारत्वमिति नातिव्याप्तिः। वक्ष्यमाणोल्लेखप्रभेदसाधारण्यायान्यतमत्वप्रवेशः, तद्विवेचनं तद्व्याख्यानावसरं करिष्यामः। अन्यतमा-

यथा वा —

गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः।
यथास्थितश्च बालाभि र्दृष्टः शौरिः सकौतुकम्॥

अत्र यस्तथाभीतं भक्तं गजन्त्वरया त्रायते स भो यमादि पुरुषोत्तम इति वृद्धाभिः संसारभीत्या तद्भयार्थिनीभिः कृष्णोऽयं मथुरापुरं प्रविशन् दृष्टः यस्तथा चञ्चलत्वेन प्रसिद्धा यः श्रियोपि कामोपचारवैराग्येन नित्यं वल्लभः सोऽयं दिव्ययुवेति युवति-समूहैः सोत्कण्ठं दृष्टः बालाभिस्तद्वाह्यगतरूपवेषालङ्कारदर्शन-मात्र-लालसाभिर्यथास्थितवेषादि-युक्तो दृष्ट इति ग्रहृभेदोल्लेखः। पूर्व्वः कामत्वाद्यारोपरूपकसङ्कीर्णः। अयं तु शुद्ध इति भेदः॥

नेकत्वप्रयुक्तम् एकस्योल्लिख्यमानत्वमितोरनावदुक्तौ। विद्याविक्रम-सौन्दर्यतपसां निधिमागतं पश्यन्ति विबुधाः शूराः स्त्रियोवृद्धाश्च आतुका दित्यत्रातिव्याप्ति रतोऽनेकप्रकारत्वमित्युक्तम्। न चोल्लिख्य-मानप्रकारत्वमितोरवास्तु उक्तोदाहरणे प्रकारस्य कस्याप्यनुल्लेखा देवानतिप्रसङ्गादिति वाच्यम्! एवमपि—

नृत्यत्त्वद्वाजिराजिप्रसरखुरपुटप्रोद्धतैर्धूलिजालै-
रालोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते।
विश्रान्तिं कामयन्ते रजनिरिति धिया भूतले सर्व्वलोकाः
कोकाः क्रन्दन्ति शोकानलविकलतया किञ्च नन्दन्त्युलूकाः॥

इत्यत्र धूलिजालरूपस्य कस्य वस्तुनोऽनेकैर्लोककोकोलूकैर्ग्रहे

एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः ।

गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ॥

गृहीतृ-भेदाभावेऽपि विषयभेदाद्बहुधोल्लेखनादसावुल्लेखः उदाहरणं श्लेषसङ्कीर्णं वचोविषये महान् पटुरित्यादिवत् बृहस्पतिरित्याद्यर्थान्तरस्यापि क्रोडीकरणात् ॥

तभि चैकेनैव रञ्जितत्वेन प्रकारेणोल्लेखनादतिव्याप्तिवारणाय प्रकारेऽनेकत्वोपादानस्यावश्यकत्वात् ।

भिल्लानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-

स्तन्नासोल्लासलौल्यात् किसलयमनसा पाणयः कीरदष्टाः ।

तन्नोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-

रित्यन्तोलेन्द्रसिंह ! त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ।

इत्यनेकगतभ्रान्तिपरम्परया मतिप्रसङ्गवारणार्थमेकमेवोक्तमिति संक्षेपः । यथाहमिति स्त्रीभिः कामत्वोल्लेखे तासां रुचिरनुरागः प्रयोजकः । अर्थिभिः कल्पतरुत्वोल्लेखे तेषां लिप्सा प्रयोजिका । शत्रुभिर्यमत्वोल्लेखे तेषां भयं प्रयोजकमित्येवं यथा योग्यमित्यर्थः ।

उदाहरणान्तरमाह—यथावेति, श्रीकृष्णस्य मथुराप्रवेशवर्णनं शौरिः श्रीकृष्णः इङ्गाभिर्जगत्त्रातेति दृष्ट इत्याद्यन्वयः । सकौतुकं सोत्कण्ठमिति दर्शनक्रिया-विशेषणं सर्वत्र सम्बध्यते । श्लोकं व्याचष्टे—यइति, तथा महाग्राहग्रहणेन युवतिसमूहैः तरुणी-समूहैः पूर्व्वमिति उदाहृतइति शेषः उल्लेखइत्यनुषज्यते आरो-परूपकासङ्कीर्णं इति पाठे आरोपस्वरूपं यद्रूपकन्तत्सङ्कीर्ण-

शुद्धो यथा --

अक्षशं कुचयोः कृशं विलग्नेत्रपुलं चक्षुषि विस्तृतं नितम्बे।
अधरेऽरुणमाविरस्तु चित्ते करुणाशालिकपालिभागधेयम्॥

इत्यर्थः, आरोपरूपकमिति पाठस्तु स्पष्टार्थ एव । उल्लेखप्रभेदान्तरमाह—एकेनेति, व्याचष्टे—ग्रहीतृभिरिति, विषयभेदादिश्रनन्तरमेकस्येति शेषः । विषयपदमाश्रयसम्बन्धिनोरुपलक्षणम् अतएव लक्षणे ग्रहीतृविषयादियादिपदेन ततमङ्ग्रहः कृतः तत्र विषयमप्तमीनिर्दिष्टोविषयइत्युच्यते, अधिकरणसप्तमीनिर्दिष्टस्त्वाश्रय षष्ठ्यादिनिर्दिष्टः सम्बन्धी ति विवेकः । गुरुरित्यस्यार्थकथनं महानिति गुरुर्महति वाच्यवदिति विश्वकोशात् । पटुरिति तु तत्पर्यवसितार्थकथनं पटुर्दक्षइत्यादीत्यादिना कोर्त्तिविषयेऽर्जुनो धवलइतितत्पार्थइत्यर्थान्तरस्य धनुर्विषये भीष्मोभीषणइतिवत् गाङ्गेयइत्यर्थान्तरस्य च सङ्ग्रहः । भीष्मस्तु भीषणे रुद्रे गाङ्गेये च निशाचरइति विश्वः । क्रोड़ीकरणात् एकवृन्तगतफलद्वयन्यायेन सङ्ग्रहात् ॥

अक्षशमिति, कपालिनो हरस्य भागधेयं भोग्यत्वेनाध्यवसितं पार्व्वतीस्वरूपं चित्ते आविरस्तु प्रकटीभवत्विति सम्बन्धः। किम्भूत ? कुचयोः कुचविषये अक्षश स्थूलम् । एवमग्रेपि। विलग्नो-मध्यः विलग्नोमध्यलग्नयोरितिविश्वः, विपुलम् आयतम् अधरे अधरोष्ठे अरुणमारक्तम् अरुणाधरमिति पाठस्तु प्रक्रमभङ्गाद-

युक्तः, चित्तेऽति करुणागालोत्यत्रापिम ध्यमणिन्यायेन सम्ब-
ध्यते एवम् -

तुषारास्तापमत्राते तामसेषु च तापिनः ।
दृगन्तास्ताडकारातेर्भूयासुर्मम भूतये ॥

इत्यादावधिकरणानेकत्वप्रयुक्तः —

यमः खलु महीभृतां हुतवहोऽसि तन्वीवृतां ।
सतां प्रति युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणां
गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितम् ।
त्वमेकइहभूतले बहुविधो विधाता कृतः ॥

इत्यादौ सम्बन्धिभेदप्रयुक्तयोल्लेखो द्रष्टव्यइति दिक् ॥ ९ ॥

॥ इत्यलङ्कारचन्द्रिकायामुल्लेखप्रकरणम् ॥

--:०:--

॥ इति सप्तमालङ्कारः ॥

स्यात्स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयम्।
पङ्कजं पश्यतः कान्ता मुखं मे गाहते मनः॥८॥
अयं प्रमत्तमधुपस्त्वन्मुखं वेत्ति पङ्कजम्।
पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः॥

स्मृतिभ्रान्तिसन्देहैः सादृश्यान्निबध्यमानैः स्मृतिमान् भ्रान्तिमान् सन्देह इति स्मृत्यादिपदाङ्कितमलङ्कारत्रयं भवति। तच्च क्रमेणोदाहृतम्॥

अथ ज्ञानप्राधान्यसाम्यात् स्मृत्यादीनलङ्कारान् लक्षयति स्यादिति–स्मृतिभ्रान्तिसन्देहैर्व्यवहर्तव्यतया हेतुभूतैस्तदङ्कं तेषामङ्कस्तदङ्कः तदङ्को विद्यते अस्मिन् तथाभूतं मत्वर्थीया च प्रत्ययात् अङ्कश्चिह्नं संज्ञेति यावत् तेन तत्संज्ञासंज्ञितमित्यर्थः अलङ्कृतित्रयं व्यवहारविषयः स्यादिति योजना। एवं च स्मृतित्व-भ्रान्तित्व-संदेहत्वानि त्रीणि लक्षणानि। तत्र स्मृतित्वं तावत्स्मरामीत्यनुभवसाक्षिको जातिविशेषः। भ्रान्तित्वं विशेष्यावृत्तिप्रकारकज्ञानत्वं। सन्देहत्वं तु निश्चयभिन्नज्ञानत्वे सति सम्भावनाभिन्नज्ञानत्वम् पारिभाषिकम्। स्मृतिभ्रान्त्यादिवारणाय सत्यन्तम्, उत्प्रेक्षावारणाय सम्भावनभिन्नेति। चमत्कारित्वं पुनरखिलालङ्कारसाधारणलक्षणत्रयेऽपि निवेशनीयं, तेन स घट इति स्मृताविदं रजतमिति भ्रान्तावयं स्थाणुः पुरुषो वेति संशयेनातिप्रसङ्ग इति ध्येयम्। गाहते आकलयति स्मरतीति यावत्। सादृश्यान्निबध्यमानैरिति चमत्कारित्वोपलक्षकम्। न त्वेतस्यापि स्वातन्त्र्येण लक्षणे प्रवेशः सादृश्यमूलकानामपि स्मृत्यादीनां चमत्कारित्वेऽलङ्कारताया अनिवार्यत्वात् चमत्-

यथा वा—दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्तान्।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्ती
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः॥

पूर्वत्र स्मृतिमदुदाहरणे सदृशस्यैव स्मृतिरत्र सदृश-लक्ष्मीस्मृतिपूर्वकं तत्सम्बन्धिनो जलनिधिमन्थनस्यापि स्मृतिरिति भेदः।

पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः।

कारितैवाजीवातुत्वात्तस्या अचमत्कारित्वे तु तेनैव वारणमिति व्यर्थं सादृश्यहेतुकत्वविशेषणं। न चैतदेवोपादीयतां न तु चमत्कारित्वविशेषणमिति वाच्यम्। उदाहृतेषु सादृश्यमूलकस्मृत्यादिष्वतिप्रसङ्गवारणार्थं तस्यावश्यकत्वादिति संक्षेपः। दिव्यानामिति-माघे जलक्रीडावर्णनप्रस्तावे पद्यमिदं—शौरिः श्रीकृष्णः अम्भस्तः, जलात् उत्तरन्तीं निर्गच्छन्तीं श्रियमिव श्रीसदृशीं काञ्चित्पुरस्तादग्रे उद्वीक्ष्य जलनिधिमन्थनस्य अस्मार्षीत् स्मृतवान्॥

अधीगर्थेति कर्मणि षष्ठी, किम्भूतां दिवि भवा दिव्यास्तेषां देवानामपि सौन्दर्यातिशयेन कृताश्चर्यां तथा स्फुरता अरविन्देन कमलेन चारुः रमणीयः हस्तो यस्यास्तथाभूतां तथा चैवंविध-नायिका-सदृशलक्ष्मीस्मरणात्तत्सम्बन्धिजलनिधिमन्थनस्मरणमितिभावः। अत्र श्रियमिवेत्युपमायाः स्मृतावङ्गत्वात्तयोरङ्गाङ्गिभावलक्षणः सङ्करः।
पलाशेति, वक्रिमलोहितारूपसादृश्याद् भ्रान्तिः। अलिः भ्रमरः, सोपि शूक्रोपि भ्रान्तिनिबन्धनइति भ्रान्तिप्रयुक्तइत्यर्थः, जीव-

सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥

अत्रान्योन्यविषयभ्रान्तिनिबन्धनः पूर्वोदाहरणाद्विशेषः ॥ ९ ॥

जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः।

किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः ॥

पूर्वोदाहृतसन्देहः प्रसिद्धकोटिकः अयन्तु कल्पितकोटिकः इति भेदः ॥ १० ॥

नेति जीवनं जलं प्राणसंयोगश्च अथवा जीवन्त्यनेनेति जीवनं धनं नम्रा अधोमुखाः विनीताश्च उन्नताः ऊर्ध्वमुखाः उद्धताश्च घटीयन्त्रं एकरज्जुसम्बद्धघटमालारूपं भाषायां राहट इति प्रसिद्धम् ॥

कनिष्ठेति, घटीयन्त्रसम्बन्धिनोर्ज्येष्ठकनिष्ठयोः कोटोारप्रसिद्धेरिति भावः ॥ ८--१० ॥

॥ इत्यलङ्कारचन्द्रिकायां स्मृतिभ्रान्तिसन्देहप्रकरणानि ॥

------:०:------

इत्यष्टम-नवम-दशमालङ्काराः समाप्ताः

शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः ।
नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥११॥

वर्णनीये वस्तुनि तत्सादृश्यधर्मारोपफलकस्तदीय धर्मनिह्नवः कविमतिविकासोत्प्रेक्षितधर्मान्तरस्यापि निह्नवः शुद्धापह्नुतिः यथा चन्द्रे वियन्नदीपुण्डरीकत्वारोपफलकस्तदीयधर्मस्य चन्द्रत्वस्यापह्नवः ।

अथापह्नुतिः—तत्र तावदभेदप्रतिपत्तिनिरूपिताङ्गाङ्गितान्यतरत्वान्निषेधोपह्नुतिरित्यपह्नुतिसामान्यलक्षणं निषेधश्च नञादिसत्त्वे वाच्यः, क्वचित्तु तदभावात् कैतवादिपदैः परमतत्त्वोपन्यासादिभिश्च व्यङ्ग्यः, तथा क्वचिद् भेदप्रतिपत्तिसमाधिकरणः, क्वचित्तु तद्व्यधिकरणइति विवेकः । एवमभेदः क्वचिदारोप्यमाणः क्वचित्तु स्वाभाविकः एवं तत्प्रतिपत्तिरपि क्वचित् व्यञ्जनया प्रायशस्तु वाच्यवृत्तेति बोध्यम् । निषेधोऽपह्नुतिरित्येतावदुक्तौ न द्यूतमेतत् कितवक्रीड़नं निशितैः शरैरिति प्रसिद्धनिषेधानुवादरूपे प्रतिषेधालङ्कारेतिव्याप्तिरतोऽभेदप्रतिपत्तिनिरूपितेत्यादि विशेषणमुपात्तं तत्र हि युद्धप्रवृत्तं कितवं प्रति युद्धे द्यूतत्वाभावो निर्ज्ञातोपि कीर्त्यमानोद्यून एव तव प्रगल्भ्यं न तु युद्धाभेदप्रतिपत्त्यङ्गं तस्यास्तदुपन्यासं विनापि सिद्धत्वात् नाप्यङ्गीभूतः निर्ज्ञातत्वेन तदुपायानपेक्षणादिति तद्वारणम् । अभेदप्रतिपत्तिनिरूपिताङ्गित्वमात्रोक्तौ शुद्धापह्नुति-हेत्वपह्नुति-पर्यस्तापह्नुति-कैतवापह्नुतिष्वव्याप्तिः । तत्र सर्वत्र नायं सुधांशुरित्यादेर्निषेधस्य व्योमगङ्गासरोरुहाद्यभेदप्रतिपत्त्यर्थत्वेन तदङ्गतयाङ्गित्वाभावात्, अभेदप्रतिपत्तिनिरूपिताङ्गत्वमात्रोक्तौ च भ्रान्तापह्नु-

यथा वा—

अङ्कङ्केपि शशाङ्करे जलनिधेः पङ्कं परे मेनिरे।
सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते।

तिच्छेकापह्नुत्योरव्याप्तिः, तयोर्भ्रान्तिशङ्कानिवारणरूपनिषेधस्य प्राधान्येनाभेदप्रतिपत्त्यङ्गत्वाभावादतस्तदन्यतरवत्त्वनिवेशः। तदाहुः—सा न्यायापाह्नवो यत्र सा विज्ञेयात्वपह्नुतिः अपह्नवाय सादृश्यं यस्मिन्नेषाप्यपह्नुतिरिति सर्व्वं चैतत् तत्तदुदाहरणव्याख्यानावसरे व्यक्तीभविष्यतीति न प्रपञ्चितम्। एवं सामान्यलक्षणं मनसि निधाय शुद्धापह्नुत्यादींस्तद्भेदान्वक्तुमुपक्रमते—शुद्धापह्नुतिरिति। लक्षणं व्याचष्टे=वर्णनीय इति, कविमतेर्विकासः स्फूर्तिशालिता तथा चोपमेय उपमानारोपफलक उपमेयधर्म्मत्वाभिमतनिषेधः शुद्धापह्नुतिरिति लक्षणमितिभावः, अत्र चानुक्त—निमितत्तं कैतवादिपदाव्यङ्ग्यत्वं च निषेधविशेषणं बोध्यं तेन छेकापह्नुतौ कैतवापह्नुतौ च नातिप्रसङ्गः कान्तः किं न हि नूपुरइति च्छेकापह्नुतौ उपमेयधर्म्मस्य कान्तस्य निषेधसत्त्वादतिप्रसङ्गवारणायाद्यं विशेषणं तत्र हि न कान्तत्वनिषेधो नूपुरारोपार्थोऽपितु नूपुरारोपएव शङ्कितकान्तत्वनिषेधार्थइति तद्व्यावृत्तिः पर्यस्तापह्नुतिवारणायोपमेयधर्मेत्युक्तं तत्रोपमानधर्म्मस्यैव सुधांशुत्वादेर्निषेधइति नातिव्याप्तिरिति सर्व्वं सुस्थम्। पुण्डरीकेति, पुण्डरीकं सिताम्भोजमित्यमरः एवं च सरोरुहपदं विशेषणपरमिति भाव।

अङ्कमिति इन्दौ दलितस्य स्फुटितस्येन्द्रनीलमणेः शकलवत्-

तत् सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥
अत्रौत्प्रेक्षिकधर्माणामप्यपह्नवः परपक्षत्वोपन्यासा-
दर्थसिद्धः ॥

स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः ।
नेन्दुस्तीव्रो न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः ॥

अत्र चन्द्र एव तीव्रत्वनैशत्वयुक्तिभ्यां चन्द्रत्वसूर्यत्वा-
पह्नवो वडवानलत्वारोपार्थः ।

अङ्कं यद्दृश्यते तत् कोऽपि कथयः अङ्कं कलङ्कं शशङ्किरे शङ्कि-
तवन्तः परेऽन्ये जलनिधेः पङ्कं मेनिरे कतिचित्पुनः सारङ्गं
मञ्जगदिरे अब्रुवन् परे इति भुवः भूमिच्छाया मूच्छायम् ऐच्छन्
विभावासिनासुराच्छायेत्यादिना क्लीबत्वं वयन्तु सान्द्रं घनं निशि
रात्रौ पीतम् अतएव कुक्षिस्थमन्धतमसङ्गाढ़ध्वान्तम् आचक्ष्महे
ब्रूमहे इत्यन्वयः । औत्प्रेक्षिकाः उत्प्रेक्षामात्रविषयाः कलङ्कादयः
अपिना स्वाभाविकस्य भूच्छायत्वस्य समुच्चयः । अर्थसिद्ध इति
नायं सुधांशुरित्यत्र नेति शब्दोपात्तत्वाच्छाब्दः इह तु पर-
मतत्वोत्कीर्तनेन स्वानभिमतत्व-सुचनादर्थगम्य इत्यर्थः। एकत्रानि
कापह्नवरूपतयाप्यत्र वैचित्र्यम्बोध्यम् ।

हेत्वपह्नुतिमाह —सएवेति, शुद्धापह्नव एवेत्यर्थः । युक्ति-
पूर्व्व इति योज्यते साध्यमनेनेति युक्तिर्हेतुः तत्पूर्व्वस्तत्सहित
इत्यर्थः, तथाच शुद्धापह्नवलक्षणएवानुक्तनिमित्त इत्यस्य स्थाने
उक्तनिमित्त इत्युक्ते हेत्वपह्नुतिलक्षणं सम्पद्यतइति भावः ।
नेन्दुरित्यादि —विरहाकुलोक्तिः, तीव्रो दारुणो यतः अतो नेन्दुः
निशि रात्रौ सत्वान्नार्कः और्वस्तु वड़वानल इत्यमरः नैशत्वेति,

यथा वा— मन्थानभूमिधरमूलशिलासहस्र-
सङ्घट्टनव्रणकिणः स्फुरतीन्दुमध्ये।
छायामृगः शशकइत्यतिपामरोक्तिः
तेषां कथञ्चिदपि यत्र हि न प्रसक्तिः॥

अत्र चन्द्रमध्ये मन्थनकालिकमन्दरशिलासङ्घट्टनव्रण किणस्यैव छायादीनां सम्भवो नास्तीति छायात्वाद्य-पन्हवः पामरवचनत्वोपन्यासेनाविष्कृतः।

अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः।
नायं सुधांशुः किन्तर्हि सुधांशुः प्रेयसीमुखम्॥

यत्र क्वचिद्वस्तुनि तदीयधर्मनिह्नवः अन्यत्र वर्ण-नीये वस्तुनि तस्य धर्मस्यारोपाय पर्यस्तापह्नुतिः।

निशि भवो नैशमन्तस्त्वमित्यर्थः, अत्रापि चन्द्रत्वं स्वाभाविको धर्मः सूर्यत्वन्त्वौत्पत्तिक मिति बोध्यम्। मन्थानेति मन्थानो मन्थनदण्डः स चासौ भूमिधरः पर्व्वतो मन्दरस्तस्य मूलभागो यत् शिलासह-स्रन्तेन सङ्घट्टनादेरा व्रणास्तस्य किणश्चिह्नमिन्दुमध्ये स्फुरति प्रकाशते छायाभूमिः मृगोहरिणः शशकः शशइत्येषा अतिपा-मराणां मूर्खतमानामुक्तिः, हि यस्मात्तेषां छायादीनां तत्र इन्दु-मध्यभागे कथञ्चिदपि केनापि प्रकारेण प्रसक्तिर्नास्तीत्यन्वयः। वैशाखमन्थमन्थानमन्थानोमन्थदण्डकेइत्यमरः । नास्तीतीति, इतिहेतोरित्यर्थः॥

पर्य्यस्तापह्नुतिमाह—अन्यत्रेति, सः अपह्नवः तथाच तदा-रोपार्थस्तस्यापह्नवइति लक्षणं निषेधस्य च न स्वाधिकरणे

यथा—चन्द्रे चन्द्रत्वनिह्नवो वर्णनीये मुखे तदारोपार्थः।

यथा वा—हालाहलो नैव विषं विषं रमा

जनाः परं व्यत्ययमत्र मन्वते।

निपीय जागर्त्ति सुखेन तं शिवः

स्पृशन्निमां मुह्यति निद्रया हरिः॥

पूर्वोदाहरणे हेतूक्तिर्नास्ति अत्र तु सास्तीति विशेषः ततश्च पूर्वापह्नुतिवदत्रापि द्वैविध्यमपि द्रष्टव्यम्॥

प्रतियोग्यारोपार्थत्वसम्भवो न वा स्वाधिकरणे स्वारोप इत्यर्थसिद्धमेवारोपसामान्याधिकरण्यत्व मन्यत्रेत्यनेनोक्तम् अतएव पर्यस्तापह्नुतिरित्युच्यते, पर्यस्ता आरोपविपरीता आरोपव्यधिकरणेति तदर्थात्। न च चन्द्रे चन्द्रत्वनिषेधस्य कथं मुखे तदारोपार्थत्वमिति वाच्यम्! आरोपदार्ढ्यसम्पादकत्वेन निषेधस्य तदर्थताया अनुभवसिद्धत्वात् अतएव दृढारोपरूपकमेवेदं नापह्नुतिरिति प्राचां सिद्धान्तस्तदनुसारेणैव च चित्रमीमांसायां प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनमित्यपह्नुतिलक्षणमुक्तं इहत्वलङ्कार-रत्नाकराद्यनुसारेणायं प्रभेद उपदर्शितसामान्यलक्षणाभिप्रायेणापह्नुतित्वेनोक्तइति निरवद्यम्॥

हालाहलइति हालाहलोविषं नैव भवति किन्तु रमा लक्ष्मीर्विषं जनाः परं केवलमत्रास्मिन्विषये व्यत्ययं वैपरीत्यं मन्वते अभ्युपगच्छन्ति। कुतस्तत्राह—यस्मात् शिवस्तं हालाहलं निपीय सुखेन जागर्ति, हरिस्तु इमां रमां स्पृशन् सन् निद्रया मुह्यति स्मर-

भ्रान्तापह्नुति रन्यस्य शङ्कायां भ्रान्तिवारणे।
तापं करोति सीत्कम्पं ज्वरः किं न सखि स्मरः॥

अत्र तापं करोतीति स्मरवृत्तान्ते कथिते तस्य ज्वरसाधारण्याद्दृजुबुध्या सख्या ज्वरः किमिति पृष्टेन सखिस्मर इति तत्वोक्त्या भ्रान्तिवारणं कृतम्॥

यथा वा—नागरिक! समधिकोन्नतिरिह
महिषः कोय मुभयतः पुच्छः।
नहि नहि करिकलभोयं
शुण्डादण्डो यमस्य न तु पुच्छम्॥

त्विति पाठे स्मरन्नपि मुह्यति किमु स्पृशन्निति अर्थः। तथाच रमाया विषरूपत्वे मोहजनकत्वं हेतुः हालाहलस्य तत्वापह्नवे च जागरसुखप्रयोजकत्वमिति बोध्यं हालाहलो विषेइति विश्वः। अतः स्पृशन्मुह्यतीति कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिर लङ्कारः सा हेतूक्तिः। ततश्चेति हेतूक्तितदनुक्तिरूपभेदादित्यर्थः। पूर्वापह्नुतिवत् शुद्धापह्नुतिवत् द्विविधा शुद्धपर्यस्तापह्नुतिः हेतुपर्यस्तापह्नुतिरितीवं द्विप्रकारत्वम्॥

भ्रान्तापह्नुतिरिति, अन्यस्य प्रकृतस्य भ्रान्तिवारणे वार्यते अनेनेति वारणं तथा च भ्रान्तिवारके तत्वाख्याने सतीत्यर्थः। भ्रान्तं भ्रमः भावे क्तः भ्रान्त्यपह्नुतिरित्यर्थः। एवं च तत्कथनहेतुक भ्रान्तिविषयनिषेधो भ्रान्तापह्नुतिरिति लक्षणं बोध्यं। तस्य तापकारित्वरूपस्मरवृत्तान्तस्य। नागरिकेति नगरे भवो नागरिकस्तं प्रति ग्रामीणस्य प्रश्नः, समधिका पश्वन्तरेभ्यः उन्नतिरुच्चता यस्यैवम्भूतउभयतः मुखपृष्ठभागयोः पुच्छं यस्यैवम्भूतश्च कोयं

इदं सम्भवद्भ्रान्तिपूर्विकायां भ्रान्तापह्नुतावुदाहरणम् ॥

कल्पितभ्रान्तिपूर्वा यथा –

जटा नेयं वेणीकृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिलेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या कुसुमशर ! किं मां प्रहरसि ॥

अत्र कल्पितभ्रान्तिर्जटा नेयमित्यादि निषेधमात्रोन्नेया पूर्ववत् प्रश्नाभावात् । दण्डी त्वत्र तत्त्वाख्यानोपमेत्युपमाभेदं मेने ।

महिषइति नहि-नहीतुत्तरं महिषइतानुषज्यते अयं करिकलभः करिशावकः कलभः करिशावकइति कोषात्कलभइत्येतावतैव सिद्धे करिपदमुत्कृष्टकरिबोधार्थम् । अयमस्य शुण्डादण्डो न तु पुच्छमिति पुच्छइति पाठोप्यर्द्धर्चादित्वात्साधुरेव अप्रयुक्तत्वं तु तत्र परं विचार्यमिति पूर्वोदाहरणे सन्देहरूपभ्रान्तिविषयज्वरत्वापह्नवः ज्वरः किमिति प्रश्नेन तद्विषयसन्देहावगमात् इह तु महिषत्वनिश्चयरूपभ्रान्तिविषयस्य महिषत्वस्येति ततोभेदः । जटेति विरहिण्याइय मुक्तिः हे कुसुमशर ! पुरारातेर्हरस्य भ्रान्त्या मां किं कुतः प्रहरसि पीडयसि यतो नेयं जटा किन्तु वेणीकृतः अवेणी वेणी सम्पद्यते तथा कृतः, कचानाङ्कलापः तथा गले गरलं नैतदपितु इयं कस्तूरी एवं शिरसि नैषा शशिलेखा किन्तु कुसुमं तथा इयमङ्गे भूतिर्भस्म न भवति परन्तु प्रियविरहाज्जन्म यस्यैवम्भूतो धवलिमा पाण्डिमेति

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमा मता ॥ इति
छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यनिह्नवे ।
प्रजल्पन्मत्पदे लग्नः कान्तः किं नहि नूपुरः ॥

कस्यचित् कञ्चित् प्रति रहस्योद्भावनेन श्रुतायामुक्तौ स्वतात्पर्य्यान्तरवर्णनेन तथ्यनिह्नवे छेकापह्नुतिः । यथा – नायिकया नर्म सखीं प्रति प्रजल्पन्मत्पदे लग्न इति स्वनायकवृत्तान्ते निगद्यमाने तदाकर्ण्य कान्तः किमिति शङ्कितवतीमन्यां प्रति नूपुर इति निह्नवः ।

'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनसूत्राद् व्यधिकरणेऽपि बहुव्रीहिर्न दुष्टः । कल्पितेति, कुसुमशरे उत्प्रेक्षितार्थः । निषेधमात्रान्वयेति' निषेधस्य प्रसक्तिपूर्वकत्वादिति भावः । मेनेइतास्वरसोद्भावनं तद्बीजं तूपमाबोधकस्य वादेरसत्त्वेऽपि तदुपगर्भे रूपकसाम्येऽप्युपमात्वं स्यादिति स्पष्टमेव । छेकापह्नुतिरिति, छेको विदग्धस्तत्कृता अपह्नुतिः छेकापह्नुतिरिति लक्ष्यनिर्देशः, वाक्यान्यथायोजनहेतुकः शङ्कित-तात्त्विकवस्तुनिषेध इति लक्षणम् । अन्यस्य शङ्कात इत्यन्यशङ्काया निवर्तनीयत्वेन हेतुतया व्यपदेशः सत्यापह्नुतौ तिरात् अत्र च शुद्धापह्नुतिवारणायाद्यं विशेषणम् । मम किलयुक्तिमाह तदर्थिकामित्यधिकताद्रूप्यरूपकवारणाय शङ्कितेति, न चानेनैव शुद्धापह्नुतिवारणाद्वाक्येत्यादिव्यर्थमिति वाच्यम् ।

**सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम्**
**नागरिकः किं मिलितो नहि नहि सखि हैमनः पवनः**
**इदमर्थयोजनया तथ्यनिह्नवे उदाहरणम् ।**

कस्य वा न भवेद्रोषः प्रियायाः सव्रणेऽधरे ।
सभृङ्गं पद्ममाघ्रासीर्वारितापि मयाधुनेति ॥

व्याजोक्तावतिप्रसङ्गवारकत्वेन तत्सार्थक्यात् । यद्वक्ष्यति छेकापह्नुतेरस्या श्चायं विशेषो यत्तस्यां वचनस्यान्यथानयनेनापह्नवः अस्यामाकारस्य हेत्वन्तरवर्णनेन गोपनमिति तथ्यनिह्नवइति तात्त्विकनिषेधे इत्यर्थः । नूपुरो मञ्जीरः मञ्जीरो नूपुरोऽस्त्रिया मित्यमरः । नर्म्मसखी क्रीडासखी, अत्र कान्तपरायाः प्रजल्पन् मत्पदे लग्नइतुरङ्गो नूपुरः तात्पर्यकत्ववर्णनेन कान्तत्वापह्नवो मुख्यः नूपुराभेदप्रतिपत्तिस्तु तदङ्गमिति बोध्यम् ॥

सीत्कारमिति, सीत्कारस्तदनुकारि मुखध्वनिं शिक्षयति । अधरम् अधरोष्ठं व्रणयति व्रणोस्यास्तीति व्रणी व्रणिनं करोतीत्यर्थे तत्करोतीति णिच् तथा रोमाञ्चन्तनोति विस्तारयतीति वाक्यत्रयं नागरिकाभिप्रायेण प्रियसखीं प्रति कयाप्युक्तं तदाकर्ण्य नागरिकः किम् मिलितइति शङ्कितवतीमन्यां प्रति तच्छङ्कानिवृत्तये नहीत्यादिना हैमन्तिकपवनपरत्ववर्णनेन तात्त्विकस्य नागरिकस्यापह्नवः, सीत्कारशिक्षादिकर्तृत्वस्य नागरिकइव पवनेपि सत्त्वात् । तदाह—अर्थयोजनयेति, विवक्षिताविवक्षितसाधारणस्यार्थस्याविवक्षितार्थसम्बन्धित्ववर्णनयेत्यर्थः। इदमित्युदाहरणमिति च ज्यात्यभिप्रायेणैकवचनम् । हेमन्तशब्दात् तत्र भव-

शब्दयोजनया यथा—

पद्मे त्वन्नयने स्मरामि सततं भावोभवत्कुन्तले,
नीले मुह्यति किङ्करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः।
इत्युत्स्वप्नवचो निशम्य स रुषा निर्भर्त्सितो राधया,
कृष्णस्तत्परमेव तद्व्यपदिशन् क्रीडाविटः पातु वः ॥

सर्वमिदं विषयान्तरयोजने उदाहरणम् ॥

इत्यर्थे सर्व० ण् च तलोपश्चे त्वणि तलोपे च हैमनइति रूपसिद्धिः, प्रजल्पन्नित्युदाहरणे एकस्य वाक्यस्यान्यथायोजन मिहत्वनेकेषा-मिति भेदः। शब्दयोजनयेति, अर्थभेदेपि शब्दश्लेषमात्रेणेत्यर्थः। पद्मे-इति, क्रीड़ायाविटोभोक्ताकृष्णो वो युष्मान् पातु रक्षत्विति सम्बन्धः। कीदृशइति, उत्स्वप्नव वः स्वप्ने उन्नतमुत्स्वप्नं वचनमर्थात् कृष्णस्य अनुभाष्य अनूद्य राधया निर्भर्त्सितः सन् तत् वचनं तत्परमेव राधापरमेव व्यपदिशन् कथयन् इति किं हे पद्मे! रमे! तूवन्नयने सततं स्मरामि, नीले भवत्याः कुन्तले केशपाशे मम भावोन्तः-करणवृत्तिरूपः मुह्यति मोहं प्राप्नोति, ननु चित्तासङ्गेनिवर्त्त-तान्तत्राह—किङ्करोमि अकिञ्चित्करोस्मि यतस्ते तव महितैः पूज्यैः विभ्रमैर्विलासैः क्रीतोस्मि मूल्येन गृहीतोस्मीति । किङ्करोस्मीति क्वचित्पाठोयुक्ततरः तत्र चास्मीत्यहमर्थकमव्ययम् अहं किङ्करो दासः क्रीतोस्मीत्यर्थः। राधापरत्वे तु हे राधे! इत्यर्थात् सम्बोधनं पद्मरूपे त्वन्नयनेस्मरामीति विशेषः शेषं पूर्व्ववत्। अत्र-रमासम्बोध्यकस्त्वन्नयनस्मरणरूपेन वाक्यार्थोऽपि तु त्वत्सम्बो-ध्यकः पद्मरूपत्वन्नयनस्मरणरूपइत्यपह्नवस्तत्परमेव तद्व्य-पदिशन्नित्यनेन प्रकाश्यते न चात्रार्थस्य रमाराधासाधारणत्वमपि तु पद्मे इति लिङ्गवचनश्लिष्टशब्दयोजनैवेति । विषयान्तरेति,

विपर्ययेऽप्यवस्थाभेदेन योजने यथा—

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया।
पतिं बुद्ध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत्॥

कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः।
निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात्॥

अत्र सत्यत्वाभिधायिना कैतवपदेन नेमे कान्ता-कटाक्षाः किन्तु स्मरनाराचा इत्यपह्नवः प्रतीयते॥

रिक्तेषु वारिकथया विपिनोदरेषु
मध्याह्नजृम्भितमहातपतापतप्ताः।

विवक्षितविपरीतेत्यर्थः। अवस्था जाग्रत्स्वप्नादिरूपा वद-न्तीति पत्यावित्यर्थे सखीधिया सखिभ्रमेण जारवृत्तान्तं स्वका-मुकवार्त्तां वदन्ती धूर्ता काचित्पतिं बुद्ध्वा सखीत्यादि वाक्यशेष-मपूरयत् पूरितवती; सखीति पुनः सम्बोधनमप्रतार्यता-सूचनाय; ततः उक्तवृत्तान्तानन्तरं प्रबुद्धा जागरणवती अत्र नासौ जाग्रदवस्थावृत्तान्तः किन्तु स्वाप्निक इत्यवस्थाभेदयोज-नयापह्नवः सखीत्यादिवाक्यशेषेण प्रकाश्यते। कैतवापह्नुति-रिति लक्ष्यनिर्देशः; व्याजाद्यैः पदैर्निह्नुतेर्व्यक्तौ सत्यां कैतवापह्नुति-रिति व्यवहर्तव्यमित्यर्थः। कैतवेनापह्नुतिरिति व्युत्पत्तेः व्याजा-द्यैरित्यनेन मिषकपटच्छलच्छद्मकैतवादयो गृह्यन्ते। एवञ्च कैत-वादिपदव्यङ्ग्यापह्नुतित्वं लक्षणं बोध्यम्। नाराचा बाणाः दृक्-पाता कटाक्षाः अपह्नवः निषेधः प्रतीयत इति असतात्वसा

**स्कन्धान्तरोत्थितदवाग्निशिखाच्छलेन**
**जिह्वां प्रसार्य तरवो जलमर्थयन्ते ॥ ११ ॥**

विषयबाधाधीनत्वादिति भावः। रिक्तेष्विति. ग्रीष्मवर्णनं तरवो वृक्षाः वारिणो जलस्य कथया वार्तयापि रिक्तेषु शून्येषु विपिन-मध्यारण्यस्योदरेषु मध्यप्रदेशेषु जलम् अर्थयन्ते प्रार्थयन्ते, कीदृशाः मध्याह्ने जृम्भितः प्रवृद्धो यो महानातप उष्णस्तस्य तापस्तापनं तेन तप्ताः सन्तप्ताः किं कृत्वा स्कन्धान्तरात् प्रकाण्डाभ्यन्तरा-दुत्थितो यो दवाग्निर्दावानलस्तस्य या शिखा ज्वाला तस्याः छलेन जिह्वां प्रसार्येति अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधि-स्तरोरित्यमरः। अत्र नेयं दवाग्निशिखा अपितु जिह्वेति छल-पदात् प्रतीयते अत्र चानभिहित वाच्यतादोषनिरासाय कथयापि वनोदरेष्विति पठनीयम् ॥ ११ ॥

॥ इत्यपह्नुति प्रकरणम् ॥ ११ ॥

—:०:—

॥ इत्येकादशालङ्कारः ॥

सम्भावना स्यादुत्प्रेक्षावस्तुहेतुफलात्मना
उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे।
धूमस्तोमन्तमः शङ्के कोकी विरहशुष्मणां
लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः॥
रक्तौतवाङ्घ्रीमृदुलौ भुवि विक्षेपणाद्ध्रुवम्
त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी।
मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः
प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुन्तोये तपस्यति॥

उत्प्रेक्षां लक्षयति—सम्भावनेति, अत्रोत्प्रेक्षेतानन्तरं सा च त्रिधेत्यध्याहार्यं तथाच सम्भावना उत्प्रेक्षापदवाच्या स्यात्सा च वस्तुहेतुफलरूपेण त्रिधेत्यर्थः, वस्तुहेतुफलानां च सम्भावनाधर्मित्वं स्वविषयकत्वसम्बन्धेन; तेन वस्तुहेतुफलविषयकत्वेनेति पर्यवसितार्थः; वस्तुत्वं च हेतुत्वेन फलत्वेन वा विवक्षितं यत्किञ्चिनत्त्वं नातो वस्तुत्वस्य केवलान्वयितया विभागसङ्गतिः। उक्तेत्यादि, अत्र आसामुत्प्रेक्षाणां मध्ये आद्या वस्तूत्प्रेक्षा; उक्तञ्चानुक्तञ्चोक्तानुक्ते आस्पदे यस्या इति विग्रहः, आस्पदं चोत्प्रेक्षायाधर्मिरूपो विषयः सिद्धासिद्धेत्यत्र विग्रहः पूर्व्ववत्। धूमेति, एतमःकोकीविरहशुष्मणां धूमस्तोमं शङ्के इत्यन्वयः; कोकस्य चक्रवाकस्य स्त्री कोकी तस्या विरहरूपाणां शुष्मणां अग्नीनां सम्बन्धिनं धूमसमूहमित्यर्थः। लिम्पतीवेति, अत्रतमइति नभइति च कर्तृपदं, रक्ताविःयादि दयितां प्रतिनायकस्योक्तिः तव मृदुलौ सुकुमारावङ्घ्रीचरणौ ध्रुवं भुवि विक्षे-

अन्यधर्मसम्बन्धनिमित्तेन अन्यस्य अन्यतादात्म्यसम्भावनमुत्प्रेक्षा। सा वस्तुहेतुफलात्मतागोचरत्वेन त्रिविधा। अत्र वस्तुनः कस्यचिद्वस्त्वन्तरतादात्म्यसम्भावना प्रथमा स्वरूपोत्प्रेक्षेत्युच्यते। अहे-

पणाद्धेतोः रक्तवर्णाविति त्वम् खेति पद्मगतायास्त्वचम् खकान्तेरिच्छया हेतुनेत्यर्थः। वैरायतइति वैरङ्करोतीत्यर्थे 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणेइति' क्यङ् मध्यइति, मध्यभागः कुचयोर्द्धृतेरधरणार्थं कनकस्य दामभिः रज्जुभिरिति निर्गोर्य्याध्यवसानरूपातिशयोक्त्या वलीभिः बद्धः किमित्यर्थः। प्रायइति, अजहल्लिङ्गं, प्रायः बहुधात्वच्चरणेन सहैक्यं प्राप्तुं तोये जले तपस्यति तपश्चरतीत्यर्थः। 'कर्म्मणो रोमन्थतपोभ्यां वर्तिचरो' रितिक्यङ्, तपसः परस्मैपदं चेति परस्मैपदम् लक्षणं परिष्कुरुते। अन्यधर्मेति, अन्यस्य विषयिणो यो धर्म्मस्तत्सम्बन्धरूपेण निमित्तेन अन्यस्य अन्यविषयकमन्यस्य विषयिणः तादात्म्येन सम्भावन मित्यर्थः; अन्यस्येति षष्ठ्यर्थो विषयताधर्म्मितारूपा; विषयिण इति षष्ठ्यर्थस्तु विशेषणतारूपा विषयता, अन्यत्वेनोत्कीर्तनं च सम्भानाया आहार्य्यतासूचनाय, तथा च विषयिनिष्ठधर्म्मसम्बन्धप्रयुक्तं सम्भावन मुत्प्रेक्षेति पर्य्यवसितं तन्निष्ठधर्मसम्बन्धप्रयुक्तमाहार्य्यतत्सम्भावनमिति तु निष्कर्षः, इतरांशस्य व्यावर्त्तकतया स्वरूपकथनमात्रपरत्वात् मुखं चन्द्रं मन्ये इत्युत्प्रेक्षायां चन्द्रनिष्ठाह्लादकत्वादिधर्मसम्बन्धप्रयुक्तं मुखे चन्द्रसम्भावन माहार्य्यमस्तीति लक्षणसमन्वयः। बाधाद्यभावदशायां तु

तोर्हेतुभावनाफलस्य फलत्वेनोत्प्रेक्षा हेतूत्प्रेक्षा फलोत्प्रेक्षेत्युच्यते ॥

अत्र आद्या स्वरूपोत्प्रेक्षा उक्तविषयानुक्तविषया

जायमाना मुखादौ चन्द्रादिसम्भावना नोत्प्रेक्षेति तद्वारणायाहार्येति ; एतेन—

विरक्तसन्ध्यापरुषं पुरस्ताद्यथा रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥

इत्यत्र रजोभरतोद्गमनरूपधर्मेण प्रत्युद्गन्तृधर्मसम्बन्धप्रयुक्तायां भरते तत् सम्भावनायामपि नातिव्याप्तिः तस्या अनाहार्यत्वात्, "सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये," इति वक्ष्यमाणसम्भावनालङ्कारविषये यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तवेत्यादावतिव्याप्तिवारणाय प्रयुक्तान्तं 'सर्वातिशायि सौन्दर्यं शङ्के सत्यवतीमुखं येन सा मृगशावाक्षी सावित्री तरलीकृतेत्यादावतिप्रसङ्गवारणाय तन्निष्ठेति, सम्भाव्यमानवृत्तित्वं धर्मविशेषणं तत्र सावित्री तरलीकारकत्वरूपो धर्मो मुखवृत्तिर्न तु सम्भाव्यमानवृत्तिरिति नातिप्रसङ्ग इति दिक् । वस्तुहेतुफलात्मता वस्तुहेतुफलतादात्म्यम् । ननु सम्बन्धान्तरेणोत्प्रेक्षाया असङ्ग्रह इति चेन्न सर्वत्राभेदेनैवोत्प्रेक्षणमिति प्राचीनमतानुसारेणेत्थमभिधानात्, एतत्सूचनायैव लक्षणे अत्र च तादात्म्योपादानमिति ।

नन्वलङ्कारसर्वस्वकारादिभिः स्वरूपोत्प्रेक्षेति व्यवहृतायास्तृतीयाया अपि सत्त्वात् त्रिविधेत्युक्तमित्याशङ्क्याह—अत्रेति, आसां मध्ये या प्रथमा वस्तूत्प्रेक्षा सैव स्वरूपोत्प्रेक्षेत्युच्यते

चेति द्विविधा। परं हेतुफलोत्प्रेक्षे सिद्धविषयाऽसिद्ध-विषया चेति प्रत्येकं द्विविधम्। एवं षण्णामुत्प्रेक्षाणां धमस्तोमेत्यादीनि क्रमेणोदाहरणानि। रजनीमुखे सर्वत्रविस्तृत्वरस्य तमसो नैल्यदृष्टिप्रतिरोधकत्वादि-धर्मसम्बन्धेन गम्यमानेन निमित्तेन सद्यःप्रियविघटित-सर्वदेशस्थितकोकाङ्गनाहृदुपगतप्रज्वलिष्यद्विरहानल-धूमस्तोमतादात्म्यसम्भावना स्वरूपोत्प्रेक्षा। तम-सो विषयस्योपादानादुक्तविषया तमोव्यापनस्य नभः-प्रभृतिभूपर्यन्तसकलवस्तुमान्द्यमलिनीकरणेन नि-मित्तेन तमःकर्तृकक्षेपनतादात्म्योत्प्रेक्षा नभः-कर्तृकाञ्जनवर्षणतादात्म्योत्प्रेक्षा चानुक्तविषया स्वरूपोत्प्रेक्षा। उभयत्रापि विषयभूततमोव्यापनस्य

इत्यर्थः। विस्तृत्वरस्येति, प्रसरणशीलस्येत्यर्थः। तमस इति, सम्भावनेत्यनेनान्वेति षष्ठार्थो विषयता तमोविषयेत्यर्थः। प्रतिरोधकत्वादीत्यादिपदात् प्रसरणशीलत्वस्य संग्रहः, प्रियैः पतिभिर्विघटिता वियुक्ताः। व्यापनस्येति षष्ठ्यन्तस्य पूर्ववदुत्प्रे-क्षापदेनान्वयः; एवमग्रे तनस्य तमस इत्यस्यापि। अनुपादानादिति विषयिवाचकाभ्यां लिम्पतिवर्षतिभ्यामन्येनानुपादानादित्यर्थः। यथाश्रुते ताभ्यामेव साध्यावसानलक्षणयोपादानादसङ्गतेः। उक्त-विषयमेवेति, सकृदुच्चारिताभ्यां लिम्पति-वर्षतिभ्यां शक्त्या लेपन-वर्षणयोः साध्यवसानलक्षणया च साधारणधर्मपुरस्कारेण व्याप-नस्य चोपस्थापनस्य युगपद्वृत्तिद्वयविरोधेनासम्भवादित्याशयः।

अनुपादानात् ॥ नन्वत्र तमसो व्यापनेन निमित्तेन लेपनकर्तृतादात्म्योत्प्रेक्षा नभसो भपर्यन्तगाढ़नीलिमव्याप्तत्वेन निमित्तेनाञ्जनवर्षणकर्तृतादात्म्योत्प्रेक्षा चेति उत्प्रेक्षाद्वय मुक्तविषयमेवास्तु? मैवं, लिम्पति वर्षतीत्याख्यातयोः कर्तृवाचकत्वेपि 'भावप्रधानमाख्यात,, मिति स्मृतेर्धात्वर्थक्रियाया एव प्राधान्येन तदुपसर्जनत्वेनान्वितस्य कर्त्तुरुत्प्रेक्षणीयतया अन्यत्रान्वयासम्भवात् ॥

अतएवाख्योपमाया मुपमानतयान्वयोपि दण्डिना निराकृतः "कर्त्ता यद्युपमानं स्यात् न्यग्भूतोसौ क्रिया पदे। स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुमिति केचित्तु तमोनभसोर्विषययोस्तत्कर्तृकलेपनवर्षणास्वरूपमौत्प्रेक्षेत्याहुः। तन्मते स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा धर्मोत्प्रेक्षा चेत्येवं द्वैविध्यम् द्रष्टव्यम्। चरणयोः स्वतः सिद्धे रक्तिमनि वस्तुतो विक्षेपणम् न हेतुरिति अहेतो स्तस्य हेतुत्वेन सम्भावना

स्मृतेः निरुक्तस्मृतेः। उत्प्रेक्षणीयतया उत्प्रेक्षाविषयतया, अन्यत्र उत्प्रेक्षायां; अन्वय सम्भवादिति, निराकाङ्क्षत्वादिति भावः। अतएव, आख्यातार्थस्य कर्तुः क्रियोपसर्जनत्वेनान्यत्रासम्भवादेव; क्वचिदतएवेत्युत्तरम्। अयमेव व्याख्यानग्रन्थः प्रमादलिखितो दृश्यते। न्यग्भूतेति,गुणभूत इत्यर्थः। स्वक्रियेति,क्रियां प्रति साधनत्वेनान्वित इत्यर्थः। व्यपेक्षितुं नालं न समर्थः,तथाच

हेतूत्प्रेक्षा, विक्षेपणस्य विषयस्य सत्वात्सिद्धविषया ।
चन्द्रपद्मविरोधे स्वाभाविके नायिकावदनकान्तिप्रेक्षा न हेतुरिति तत्र तद्धेतुत्वसम्भावना हेतूत्प्रेक्षा ।
वस्तुतस्तदिच्छाया अभावादसिद्धविषया मध्यः । स्वयमेव कुचौ धरति न तु कनकदामबन्धत्वेनाध्यवसितायाः वलित्रयशालितायाः बलादिति मध्यकर्तृककुच-

निराकाङ्क्षत्वादुपमानत्वेनान्वयो न सम्भवतीति भावः । एतेन तमसि लेपनकर्तृत्व मुत्प्रेक्ष्य मित्यलङ्कारमत मपास्तम्, तस्यापि कर्तृविशेषणत्वात् विवक्षितविवेकेन लेपनस्यैवोत्प्रेक्ष्यत्वाच्च । एवञ्च प्रधानभूतलेपनक्रिया गोचरा भावनैव निगीर्णव्यापनविषयेति सिद्धम् । न च युगपद्वृत्तिद्वयविरोधः शङ्काः ! तदनभ्युपगमात् । केचिदिति मतइति चास्वरसोद्भावनं ; तद्बीजन्तु तमोनभसोः कर्तृत्वेन विषयत्वेन च वारद्वयमन्वयक्लेशः ; तथा धर्म्युत्प्रेक्षा सा धर्मप्रयुक्ता ; धर्मोत्प्रेक्षा तु तत्सहचरितधर्मिसम्बन्धप्रयुक्तेति लक्षणाननुगमः । न च तन्निष्ठतत्समानाधिकरणान्यतरत्वेन धर्मनिवेशान्नाननुगमइति वाच्यम् ! सर्वत्र सादृश्यनिमित्ताया एवोत्प्रेक्षायाः सम्भवेनान्यतरत्वादिनिवेश प्रयुक्तगौरवस्यानुपादेयत्वादिति । हेतुत्वेनेति, हेतुरूपतयेत्यर्थः । हेतुत्वसम्भावना हेतुरूपतासम्भावना, फलत्वेन फलरूपा, एवमग्रेपि बोध्यम् ।

अथोदाहृताद्युत्प्रेक्षासु बोधः प्रकारः प्रदर्श्यते—तत्र, धूमस्तोममित्यादौ कोकाङ्गनाविरहानलसम्बन्धि धूमस्तोमाभिन्नतमो

ष्टते स्तत्फलत्वेनोत्प्रेक्षा सिद्धविषया फलोत्प्रेक्षा जलजस्य जलावस्थिते रुदन्नासतपस्त्वेनाध्यवसितायाः। कामिनीचरणसायुज्यप्राप्तिर्न फलमिति तस्या गगनकुसुमायमानायास्तपःफलत्वेनोत्प्रेक्षणात् असिद्धविषया फलोत्प्रेक्षा अनेनैव क्रमेणोदाहरणान्तराणि।

विषया सम्भावनेति बोधः; नामार्थयोरभेदान्वयात्। एवं मुखम् चन्द्रं मन्ये इत्यादावपि। नूनं मुखं चन्द्र इत्यादौ तु चन्द्रप्रकारकसम्भावनाविषयो मुखमिति बोधः। मुखविषया चन्द्रप्रकारिका च सम्भावना तादात्म्यसंसर्गिकैव,तथानुभावात् चमत्कारप्रयोजकस्य संसर्गान्तरस्याभावाच्च। न चैवं चन्द्रत्वप्रकारिका तस्य चन्द्रोपसर्जनत्वात्। एवं ध्रुवेवादिशब्दसमभिव्याहारेऽपि बोध्यम्। लिम्पतीवेत्यनुक्तविषयोत्प्रेक्षोदाहरणे तु लिम्पतिना साध्यवसानलक्षणया लेपनव्यापनोभयसाधारणेन सान्द्रमलिनीकारकत्वादिना रूपेणोपस्थापिते तमोव्यापने लेपनसम्भावनान्वयात् सान्द्रमलिनीकारकं तमःकर्तृकाङ्गकर्म लेपनप्रकारकसम्भावनाविषय इति बोधः। व्यञ्जनयोपस्थिते व्यापने तादृशसम्भावनान्वय इति प्रदीपकृतः। एवं वर्षतीत्यादावपि बोध्यम्। विक्षेपणात् ध्रुवमित्यादिहेतूत्प्रेक्षोदाहरणे हेतुः पञ्चम्यर्थः, तत्र चाभेदेन प्रकृत्यर्थान्वयः; हेतोश्च स्वप्रयोज्याश्रयत्व सम्बन्धेन, रक्तत्वविशिष्टे तस्य प्रकारतासम्बन्धेन, सम्भावनायां तस्याश्च विषयतया चरणयोरन्वयः। तथाच भूम्यधिकरणकविक्षेपणाभिन्नहेतुकरक्तप्रकारकसम्भावनाविषयावङ्घ्री इति बोधः। न च

तादात्म्यसम्बन्धेन हेतुविधेयकत्वाभावान्नेयं हेतूत्प्रेक्षा स्यात्, किन्तु तादात्म्येन, तथाविधरक्तस्वरूपोत्प्रेक्षैवेति वाच्यम्। विवक्षितविवेकेन विक्षेपणे हेतुभेदस्योत्प्रेक्षणीयतया विक्षेपणम् प्रति विशेष्यभूतस्यापि हेतोर्विधेयत्वोपगमात् मुखचन्द्र इत्यादिरूपकइवानुयोगित्वमुखस्याभेदस्य विक्षेपणसंसर्गत्वाभ्युपगमेन च विक्षेपणे हेतुभेदभानसम्भवात्। हेतुविशिष्टस्वरूपोत्प्रेक्षाया मुखतः प्रतीतावपि विवक्षावशेन हेतूत्प्रेक्षात्वेनैव व्यपदेशः ; तथा 'दध्ना जुहोतीत्यत्र मुखतो दधिविशिष्टहोम-प्रतीतावपि विवक्षितविवेकेन होमे दधिविधित्वव्यपदेश इति बोध्यम्। न च स्वप्रयोज्याश्रयत्वसम्बन्धेन वा हेतुरूपधर्मोत्प्रेक्षैव रक्तादौ स्वीक्रियताम् कृतमीदृशकल्पनाक्लेशेनेति वाच्यम्। धर्मोत्प्रेक्षाङ्गीकारे दूषणस्य प्रागेवावेदितत्वात्। अतएव 'हर्षात् लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीरिति हेतूत्प्रेक्षामुदाहृतवतः प्रकाशकृतोपि तत्र हर्षहेतुकलगनतादात्म्यसम्भावनमेव स्वाभाविके लगनेऽभिमतम्; अस्मदुक्तरीत्या तु लक्ष्मीरूपे विषये यथोक्तहर्षहेतुकलगनतादात्म्यसम्भावनमुचितम्, लग्नस्य धर्मोपसर्जनत्वेन सम्भावनायामन्वयायोगादिति ध्येयम्। एवन्त्वन्मुखाभिख्ययेत्यसिद्धविषयहेतूत्प्रेक्षायामपि बोध्यम्। विषयसिद्धत्वासिद्धत्वाभ्यां बोधे विशेषाभावात् मध्यः किमित्यादिफलोत्प्रेक्षास्थले फलं चतुर्थ्यर्थः, तत्र चाभेदेन प्रकृत्यर्थान्वयः पूर्ववत्, फलस्य च प्रयोजकत्वसंसर्गेण बद्धत्वे तद्द्वारकेण तेनैव बद्धे वान्वयस्तत्तादात्म्यसंसर्गकसम्भावनाया मध्ये विषयतया। एवञ्च कुचधरणाभिन्नफलककनकदामकरणकबद्धत्वाश्रयसम्भावनाविषयो मध्य इति बोधः। एवं प्रायोजमित्यादा-

बालेन्दुवक्राण्यविकासभावाद्
बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानाम्
नखक्षतानीव वनस्थलीनाम् ॥

अत्र पलाशकुसुमानां वक्रत्वलोहितत्वेन सम्बन्धेन निमित्तेन सद्यः कृतनखक्षततादात्म्यसम्भावना उक्तविषया स्वरूपोत्प्रेक्षा। पूर्वोदाहरणे निमित्तभूतधर्मसम्बन्धो गम्यः, इह तूपात्त इति भेदः। नन्विवशब्दस्य सादृश्यपरत्वेन प्रसिद्धतरत्वादुपमैवास्तु लिम्पतीवेत्युदाहरणे लेपनकर्तृरूपमानत्वाहस्य क्रियोपसर्जनत्ववदिह नखक्षतानामन्योपसर्जनत्वस्योपमाबाधकस्याभावात्।

उच्यते—उपमाया यत्र क्वचित् स्थितेरपि नखक्षतैः सह वक्तुं शक्यतया वसन्तनायकसमागतवनस्थलीसम्बन्धित्वस्याविशेषणस्यानपेक्षितत्वादिह तदुपादानं पलाशकुसुमानां नखक्षततादात्म्यसम्भावनायामिवशब्दमवस्थापयति तथात्व एव तद्विशेषणा-

वपि 'फलन्तुमुनोऽर्थ' इति पूर्ववदेव बोधः। फलोत्प्रेक्षात्वं चोपदर्शितरीत्योपपादनीयमिति बहुवक्तव्येपि विस्तरभयादुपरम्यते।

बालेन्दु वक्राणीति न विद्यते विकासो येषान्तान्यविकासानि तेषां भावात् विकासरहितत्वाद्धेतोः, बालेन्दुवत् द्वितीया चन्द्रवत् वक्राणि, तथातिशयेन लोहितानि आरक्तानि पलाशानि

साफल्यात् अस्ति च सम्भावनाया मिवशब्दः दूरे तिष्ठन् देवदत्त इवाभातीति।

पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम्।
तदादायकरैरिन्दुर्लिम्पतीव दिगङ्गनाः॥

अत्र तरङ्गाग्रैः फेनचन्दनस्य प्रेरणा पेषणा-तयोत्प्रेक्ष्यते समुद्रादुत्थितस्य प्रथमं समुद्रपूरे प्रसृतानां कराणां दिक्षु व्यापनञ्च समुद्रोपान्त-फेनचन्दनकृतलेपनत्वेनोत्प्रेक्ष्यते। उभयत्र क्रमेण समुद्रप्रान्तगतफेनचन्दनपुञ्जीभवनं दिशां धवली-करणञ्च निमित्तमिति फेनचन्दनप्रेरणाकिरण-व्यापनयोर्विषययोरनुपादानादनुक्तविषये स्वरूपोत्-प्रेक्षे। येषां तूपात्तयोः समुद्रचन्द्रयोरेव तत्-

पलाशकुसुमानि वसन्तेन नायकेन समागमम् प्राप्तानां वनस्थ-लीनामङ्गनानां सद्यस्तत्कालसम्भूतानि नखक्षतानीव बभुः शुशुभिरइत्यन्वयः। पूर्वेति, धूमस्तोममित्यत्रेत्यर्थः ननु लोके सम्भावनायामिवशब्दो न दृष्ट इत्यत आह—अस्तिचेति।

पिनष्टीवेति, समुद्रस्तरङ्गाणामग्रभागैः फेनरूपं चन्दनम् पिनष्टीव इन्दुस्तत्फेनचन्दनमादाय करैः किरणैर्दिक्रूपा अङ्गनाः लिम्पतीव अनुलिम्पतीवेत्यर्थः। समुद्रोपान्तेति, समुद्र-स्योपान्ते तटे यत् फेनचन्दनम् तत्कृतम् यत्तासान्दिशां लेपनम् तत्वेनेत्यर्थः। उभयत्र उभयोरुत्प्रेक्षयोः; येषां अलङ्कारसर्वस्व कारादीनाम्।

कर्तृकर्मपेषणलेपनरूपधर्मोत्प्रेक्षेति मतम्। तेषां मते पूर्वोदाहरणे धर्मिणि धर्म्यन्तरतादात्म्योत्प्रेक्षा इह तु धर्मिणि धर्मसंसर्गोत्प्रेक्षेति भेदोऽवगन्तव्यः।

रात्रौ रवेर्दिवाचेन्दोरभावादिव सः प्रभुः।
भूमौ प्रतापयशसी सृष्टवान्सततोदिते॥

रात्रौ रवेर्दिवा चन्द्रस्याभावः सन्नपि प्रतापयशसोः सर्गेन हेतुरिति तस्य तद्धेतुत्वसम्भावना सिद्धविषया हेतूत्प्रेक्षा।

विवस्वतानायिषतेव मिश्राः
स्वर्गोसहस्रेण समं जनानाम्।
गावोपि नेत्रापरनामधेया-
स्तेनेदमान्ध्यं खलु नान्धकारैः॥

रात्राविति, स प्रक्रान्तः प्रभुर्भूपतिर्भूमौ रात्रौ रवेरभावाद्धेतोरिव दिवा चेन्दोरभावाद्धेतोरिव सततम् निरन्तरमुदिते प्रतापयशसी सृष्टवान्निर्मितवानित्यर्थः; रक्षावित्युदाहरणे भावरूपो हेतुरिहत्वभावरूप इति भेदः।

विवस्वतेति,विवस्वता सूर्य्येण स्वस्य गोसहस्रेण किरणसहस्रेण सम्मिश्राः मिश्रिताः जनानां नेत्रापरनामधेया गावोपि अनायिषतेव नीता इव—यथा गोपालेन परकीयाभिर्गोभिर्मिश्राः स्वीया गावो नीयन्ते तथा गोपदवाच्यत्वसाजात्येन मिश्रिता विवस्वतापि नीता इत्यर्थः; खलु सम्भावनायां, तेन नयनेन हेतुना,

अत्र विवस्वता कृतं स्वकिरणैः इह जनलोचनानां नयनमध्वदेव रात्र्यान्ध्यं प्रति हेतुत्वेनोत्प्रेक्ष्यत इति असिद्धविषया हेतूत्प्रेक्षा।

पूरं विधुर्वर्द्धयितुं पयोधेः
शङ्केयमेणाङ्कमणिं कियन्ति।
पयांसि दोग्धि प्रियविप्रयोगे,
सशोककोकी नयने कियन्ति॥

अत्र चन्द्रेण कृतं समुद्रस्य बृंहणं सदैव, तदा तेन

इद्रमान्ध्यं न त्वन्धकारैरित्यन्वयः, 'गौः सर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी दृक् वाणदिग्वाग्भूष्वप्सु, भूम्नि चेति मेदिनी। अत्र चानायिपनेति विषयोत्प्रेक्षणपूर्वकान्तस्य हेतुत्वे नोत्प्रेक्षणमिति पूर्वस्माद्भेदः। एवं पूर्वत्र इच्छयेति गुणरूपो हेतुरिह तु क्रियारूप इत्यपि द्रष्टव्यम् अत्र चोत्प्रेक्षाद्वयसत्वेपि हेतूत्प्रेक्षायाः प्राधान्यात्तत्वेनैव व्यपदेशो न तु स्वरूपोत्प्रेक्षात्वेन तस्या अङ्गत्वात्, एवमन्यत्रापि बोध्यम्।

पूरमिति अयं विधुश्चन्द्रः पयोधेः पूरम्वर्द्धयितुम् एणाङ्कमणिं चन्द्रकान्तं कियन्ति लोकोक्ता अपरिमितानि पयांसि दोग्धीति शङ्के, तथा प्रियैः पतिभिर्विप्रयोगे वियोगे सति सशोकानाङ्कोकाङ्गनानां नयने कर्म्मभूते कियन्ति पयांसि दोग्धीति शङ्के इत्यन्वयः। दुहेर्द्विकर्म्मकत्वादेणाङ्कमणिमिति द्वितीया, एवं नयने इत्यत्रापि। मध्यः किमित्यत्रैकस्य बद्धवस्य फलत्वेन कुचच्छतेरुत्प्रेक्षणमिह तु द्रावणस्रावणयोर्द्वयोः फलत्वेन पूरवर्द्धनस्य तदिति भेदः। बृंहणम्वर्द्धनं,तदा वर्द्धनकाले, तेन चन्द्रेण।

हतस्य चन्द्रकान्तद्रावणस्य कोकाङ्गनाबाष्पस्रावणस्य च फलत्वेनोत्प्रेक्ष्यत इति सिद्धविषया फलोत्प्रेक्षा ॥

रथस्थितानां परिवर्त्तनाय
पुरातनानामिव वाहनानाम् ।
उत्पत्तिभूमौ तुरगोत्तमानां
दिशि प्रतस्थे रविरुत्तरस्याम् ॥

अत्रोत्तरायणस्याश्वपरिवर्त्तनमसदेव फलत्वेनोत्प्रेक्ष्यत इति असिद्धविषया फलोत्प्रेक्षा ॥

एताएवोत्प्रेक्षा ।

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोपि तादृशः ॥

इत्युत्प्रेक्षाव्यञ्जकत्वेन पगणितानां शब्दानां प्रयोगे वाच्याः। तेषामप्रयोगे गम्योत्प्रेक्षाया यथा—

रथस्थितानामिति, रविः रथे स्थितानां नियुक्तानां पुरातनानां वाहनानाम् अश्वानां परिवर्त्तनायेव तुरगोत्तमानाम् उत्पत्तिभूमावुत्तरस्यान्दिशि प्रतस्थ इत्यन्वयः। प्रायोक्तमित्यत्र शक्तस्य गुणस्य फलत्वेनोत्प्रेक्षणमिह तु परिवर्त्तनक्रियाया इति भेदः।

नन्वलङ्कारसर्व्वस्वकारादिभिरन्येषामपि जात्यादिभेदानामुक्तत्वात् कुतस्ते न प्रदर्शिता इत्याशङ्क्याह—एताएवेति, उक्तभेदा एवेत्यर्थः। उत्प्रेक्षा इत्यनन्तरं चमत्कारविशेषप्रयोजिका इति शेषः। तथाच जात्यादिभेदानां चमत्कारविशेषानाधायकत्वादप्रदर्शनमिति भावः। इत्युत्प्रेक्षेति, इत्यनेनोत्प्रेक्षावबोध-

त्वत्कीर्त्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम् ॥१२

कल्वेनेत्यर्थः। त्वत्कीर्तिरिति अत्रानुपात्तस्वर्गगमनविषया स्वर्गङ्गाप्रवेशतादात्म्योत्प्रेक्षा, विशेषणीभूतभ्रमणश्रान्तत्वरूप-हेतूत्प्रेक्षा वा प्रतीयत इति बोध्यम् ॥

इति श्रीमत् तत्सदुपाख्यवैद्यनाथकृतायामलङ्कारचन्द्रिकायां
श्रीमत्कुवलयानन्दीयटीकायामुत्प्रेक्षाप्रकरणम् ॥

---

॥ इत्युत्प्रेक्षानाम द्वादशालङ्कारः ॥ १२ ॥

रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः ।
पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ॥ १३

विषयस्य स्वशब्देनोल्लेखनं विना विषयिवाचकेनैव शब्देन ग्रहणं विषयनिगरणं, तत्पूर्वकं विषयस्य विषयिरूपतयाध्यवसानमाहार्यनिश्चय स्तस्मिन् सति रूपकातिशयोक्तिः । यथा—नीलोत्पलशरशब्दाभ्यां लोचनयोः कटाक्षाणाञ्च ग्रहणपूर्वकं तद्रूपताध्यवसानम् । यथा वा—

अतिशयोक्तिं लक्षयति—रूपकातिशयोक्तिरिति, ग्रहणम् उपस्थापनम् । विषयिरूपतयेति, विषयिणो रूपमस्य तस्य भावस्तया तथेत्यर्थः । रूपस्याभेदतादूप्यान्यतरत् तस्मिन् सतीति, सप्तमीसमयोक्तिरित्यभिप्रायेण । एवञ्चानुपात्तविषयविषयिकाहार्यनिश्चयविषयीभूतं विषयभेदतादूप्यान्यतरद्रूपकातिशयोक्तिरिति लक्षणं बोध्यम् । अत्र रूपकवारणायानुपात्तेति, अयमेव च रूपकादस्यां विशेषोऽतिशय इत्युच्यते । भ्रान्तिवारणायाहार्येति । उत्प्रेक्षावारणाय निश्चयेति ।

नीलोत्पलेति, अत्र नीलोत्पलपदार्थाध्यवसानलक्षणया शक्यलक्ष्योभयानुगतकान्तिविशेषादिपुरस्कारेणोपस्थिते कामिनीनयने शक्त्योपस्थितस्य नीलोत्पलत्वविशिष्टस्याभेदसंसर्गेणान्वयः । शक्त्युपस्थितयोः कृतीष्टसाधनयोरिव शक्तिलक्षणाभ्यामुपस्थितयोरप्येकपदार्थयोस्तात्पर्यवशेनान्वयाङ्गीकारे बाधकाभावात् । एवञ्च नीलोत्पलाभिन्नकान्तिविशेषवद्द्वन्द्वादिति बोधादिगम-

वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या
सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली ।
अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ,
तत्रत्यानां सुलभममृतं सन्निधानात्सुधांशोः ॥

अत्र वाप्यादिशब्दैर्नाभिप्रभृतया निगीर्णाः, अत्रातिशयोक्तौ रूपकविशेषाणां रूपके दर्शितानां, विधानामिहापि सम्भवोऽस्तीत्यतिदेशेन प्रदर्शनार्थं तेनात्राप्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यं द्रष्टव्यम् । तत्राप्यधिकन्यूनताविभागश्चेति सर्वमनुसन्धेयम् ।

भेदातिशयोक्तिरित्युच्यते । नचैवं सति रूपकादवैलक्षण्यमिति वाच्यम्! रूपके विषयिभेदव्याप्यस्य विषयतावच्छेदकस्य भानेन वैलक्षण्यस्य स्फुटत्वात् । यदा त्वभेदभानेन तात्पर्यं किन्तु भेदभाने, तदा कान्तिविशेषादिरूपताद्रूप्यस्यैव बाधात्ताद्रूप्यातिशयोक्तिर्वक्ष्यते इति बोध्यम् ।

वापीति, मध्यभागमारभ्यमुखपर्यन्तं नायिकाङ्गवर्णनमिदं गगने सूक्ष्मतया तद्वल्लक्ष्ये मध्ये कापि अनिर्वचनीयशोभा वापी तद्वद्गम्भीरा नाभिः स्फुरति शोभते तत्परन्तदूर्ध्वभागे ऐन्द्रनीली इन्द्रनीलघटिता सूक्ष्मपद्या सरणिस्तद्वत् श्यामा रोमावली, स्फुरतीत्यनुषज्यते । किम्भूता ? काञ्चननिर्म्मितां सोपानपङ्क्तिं तत्सदृशीं त्रिवलीमधिगतवती प्राप्तवती ; तथा अग्रे तदूर्ध्वदेशे शैलौ तद्वत्तुङ्गविशालौ कुचौ स्फुरत इति विभक्तिपरिणामेन सम्बध्यते । कीदृशौ ? सुकृतिनां पुण्यकृतां सुगमौ सुलभगमनौ

यथा वा—सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरन् ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम्॥

सुलभौ च पुनः कीदृशौ? चन्दनतरुभिश्चन्दनपङ्केन चाच्छन्नौ व्याप्तौ देशौ ययोस्तथाभूतौ; तत्रत्यानान्तदाश्लिष्टानाञ्च सुधांशो-स्तद्वदाह्लादकस्य मुखस्य सन्निधानादमृतं तद्वदास्वाद्यमधर-माधुर्य्यं सुलभमित्यन्वयः। विधानाभेदानाम् इतीत्यस्य प्रदर्श-नार्थमित्यनेनान्वयः। अतिदेशेनेति, सादृश्येनेत्यर्थः। मुख्यरूपका-भेदस्यातिशयोक्तावभावाद्रूपकपदं रूपकसदृशपरं, यथा मास-मग्निहोत्रं जुहोतीत्यत्राग्निहोत्रपदवद्धर्म्मातिदेशकमित्याशयः। आधिक्यन्यूनत्वत्यत्रानुभयोक्तिरुक्तोदाहरणेषु प्रसिद्धतरत्वादनु-पादानं बोध्यम्। यत्त्वत्र कैश्चिदुक्तं विषयिवाचकपदस्य विषये साध्यवसानलक्षणायाः शक्यतावच्छेदकमात्रप्रकारकलक्ष्यवि-शेष्यकबोधत्वं कार्य्यतावच्छेदकम्। एवञ्च निगरणे सर्व्वत्र-विषयतावच्छेदकधर्म्मरूपेणैव विषयस्य भानन्न विषय्यभिन्नत्वे-नेति स्थितेऽभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यम-युक्तमिति तत्प्रौढिविलसितम्। शक्यतावच्छेदकस्य लक्ष्ये पूर्व्वम-प्रतीतत्वेन तद्विशिष्टतया लक्षणाया असम्भवात् यद्धर्म्मविशिष्टे शक्यसम्बन्धग्रहस्तद्धर्म्मप्रकारकलक्ष्योपस्थितेः समानप्रकारक-शाब्दबोधे हेतुत्वात् लक्षणापरिहार्य्यायाः अनुपपत्तेस्तदवस्थ-त्वाच्च; एवमपि तात्पर्य्यवशात्तादृशबोधाङ्गीकारे तद्वशादेव शक्याभेदप्रकारकबोधेऽपि बाधकाभावान्मात्रपदेन विषयताव-च्छेदकस्यैव व्यावर्त्तनादिति दिक्।

सुधाबद्धेति, विद्धशालभञ्जिकाख्यायां नाटिकायां स्फटिक-

उपप्राकाराग्रं प्रहिणु नयने तर्कय मनाः-
गनाकाशे कोयङ्गलितहरिणः शीतकिरणः ॥

इत्यत्र कोयमित्युक्त्या प्रसिद्धचन्द्राद्भेदस्तत उत्कर्षश्च गर्भितः। एवमन्यत्राप्यूहनीयम्।

प्राकारशिखरगतां मृगाङ्कावलीमालोकयतो राज्ञो विदूषकं प्रत्युक्तिरियम्। प्राकाराग्रसमीपे नयने प्रहिणु प्रेरय, मनाक् ईषत्तर्कय अनाकाशे अनन्तरीक्षे कोयं शीतकिरणश्चन्द्र इति। मुखे चन्द्रगताह्लादकारित्वरूपताद्रूप्याध्यवसानम्। कीदृशः? गलितश्च्युतो हरिणो यस्मात्तथाभूतः, तेन निष्कलङ्कतयोत्कर्षाभिव्यक्तिः पुनः कीदृक्? सुधायां बद्धः ग्रासस्तदभिलाषो यैस्तैरुपवनसम्बन्धिभिश्चकोरैरनुसृतां लवल्याः फलपाकस्य प्रणयिनीं सदृशीम् अच्छां स्वच्छां ज्योत्स्नात्वेनाध्यवसितां कान्तिं प्रभां किरन्, प्रसारयन्नित्यर्थः; लवली लताविशेषो 'हरफारेवडी इति भाषा'-प्रसिद्धः, प्राकारो वरणः शाल इत्यमरः। समाबद्धग्रासैरिति क्वचित् पाठस्तत्राप्युक्त एवार्थः। नवलवलीति पाठे नवश्चासौ लवलिपाकश्चेत्यन्वयो बोध्यः। नन्विहाभेदविवक्षैव किं नस्यादत आह—अत्रेति, कोयमित्यनेनानिर्ज्ञातत्वप्रकाशनात् प्रसिद्धस्य निर्ज्ञातत्वात् तद्वैलक्षण्यावगतिरिति भावः। गर्भितः गलितेत्यादिविशेषणव्यङ्ग्यत्वेनाभिप्रेतः, अन्यत्रापीति।

अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः
कलङ्केनाश्लिष्टो न खलु परिभूतो दिनकृता।
कुहूभिर्नो लुप्तो न च युवतिवक्त्रेण विजितः
कलानाथः कोयं कनकलतिकायामुदयते ॥

यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता।
त्वत्सूक्तिषु सुधा राजन्! भ्रान्ताः पश्यन्ति तां विधौ॥
अत्र त्वत्सूक्तिमाधुर्यमेवामृतमित्यतिशयोक्तिः।
चन्द्रमण्डलस्थममृतं न भवतीत्यपह्नुतिगर्भा॥

यथा वा—

मुक्ताविद्रुममन्तरा मधुरसः पुष्पं परं धूर्वहं
प्रालेयद्युतिमण्डले खलु तयोरेकाधिकानार्णवे।
तस्मोदञ्चति शङ्खमूर्ध्नि न पुनः पूर्वाचलाभ्यन्तरे
तानीमानि विकल्पयन्ति तदमे येषां न सा दृक्पथे॥

इत्यादावित्यर्थः। अथवान्यत्रापि न्यूनतायामपीत्यर्थः। 'कोयं भूमिगतश्चन्द्र इत्यादावदिव्यत्वरूपन्यूनता प्रकाशनमूहनीयमिति भावः। ननूक्तोदाहरणेष्वयमिति विषयस्योपादानात्कथमतिशयोक्तिरिति चेत्? अत्राहुः—इदन्त्वस्य विषयिविशेषणत्वेन विवक्षायामतिशयोक्तिरेव, यदा तु विषयविशेषणत्वविवक्षा तदा-रूपकमिति व्यवस्था; अतएव प्रकाशकृतादशमे रूपकातिशयोक्त्यादिसन्देहसङ्करे 'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदतीत्युदाहृतमिति। एनां विभजते—यद्यपह्नुतीति, अपह्नुतिगर्भत्वं पर्यस्तापह्नुतिगर्भत्वम्, सैव रूपकातिशयोक्तिरेव तथाच सापह्नवत्व-निरपह्नवत्वभेदेन द्विविधातिशयोक्तिरिति भावः।

मुक्तेति, तान्यनुभवैकवेद्यानि इमानि वस्तूनि ते इमे जनाः विकल्पयन्ति सदसद्वेति विकल्पविषयाणि कुर्वन्ति, येषां जनानां सा प्रकान्ता सुन्दरी दृक्पथे लोचनमार्गे नास्तीत्यन्वयः। तादृशसुन्दरीदर्शनशालिनस्तु विकल्पयन्तीति भावः। तानि कानि

अत्राधररसएव मधुरसइत्याद्यतिशयोक्तिः पुष्परसो मधुरसो न भवतीत्यपह्नुतिगर्भा। अलङ्कारमत्रैकृता स्वरूपोत्प्रेक्षायां सापन्हवत्वमुदाहृतम् —

गतासु तीरन्तिमिघट्टनेन
ससम्भ्रमं पौरविलासिनीषु।
यत्रोल्लसत्फेनततिच्छलेन
मुक्ताट्टहासेव विभाति शिप्रा॥

ततस्त्रियानत्र भेदः—एतत्तु शुद्धापन्हुतिगर्भं यत्र फेनततित्वमपन्हुतं तत्रैवाट्टहासत्वोत्प्रेक्षणादिह तु पर्य्यस्तापन्हुतिगर्भत्व मिन्दुमण्डलादावपह्नुतस्यान्य-

वस्तूनि ?तत्राह—मुक्ता मौक्तिकं विद्रुमं प्रवालञ्चान्तरा अनयोर्मध्ये-मधुरसः'अन्तरान्तरेण युक्ते'इति द्वितीया। पुष्पं परं केवलं धूर्वहं भारवाहकं न तु मधुरसयुक्तं, तयोर्मुक्ताविद्रुमयोः,खलु निश्चितं, प्रालेयद्युतिमण्डले चन्द्रमण्डले, एकासिका एकस्मिन्नासिका अवस्थितिः एकाधिकरणमित्यर्थः। न त्वर्णवे समुद्रे तच्च चन्द्रमण्डलं च शङ्खस्य मूर्ध्नि मस्तके उदश्चति उदयं प्राप्नोति न पुनः पूर्वाचलस्योदयगिरेरभ्यन्तरे उदञ्चति; अत्र मुक्ताविद्रुममधुरसप्रालेयद्युतिमण्डलशङ्खशब्दैः क्रमेण दन्ताधरतन्माधुर्य्यमुखकण्ठा निगीर्णाः। पूर्वोदाहरणे भ्रान्तत्वोक्त्या स्पष्टोपन्हवः, इह तु परं धूर्वहमित्युक्त्या गूढ़इति भेदः। 'प्रालेयं मिहिकाचे'त्यमरः।

गतास्विति,पुरे भवाः पौर्य्यस्तासु विलासिनीषु तिमीनां सङ्घट्टनेन ससम्भ्रमं सभयन्तीरं प्रति गतासु सतीषु यत्र नगर्य्यां शिप्रा नदी उल्लसन्तीनां फेनततीनाञ्छलेन मुक्तः क्षमः अट्टहासः उच्चहास्यं

तादेः सूक्तादिषु निवेशनात्। इदञ्च पर्यस्तापह्नुतिगर्भत्वमुत्प्रेक्षायामपि सम्भवति ॥

तत्र स्वरूपोत्प्रेक्षायां यथा—

जानेऽतिरागादिदमेव बिम्बं
बिम्बस्य च व्यक्तमितोऽधरत्वम्।
द्वयोर्विशेषावगमाक्षमाणां
नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥

अत्र प्रसिद्धफले बिम्बतामपह्नुत्यातिरागेण निमित्तेन दमयन्त्यधरे तदुत्प्रेक्षा पर्य्यस्तापह्नुतिगर्भा, हेतूत्प्रेक्षायान्तद्गर्भत्वं प्राक्लिखिते हेतूत्प्रेक्षोदाहरणे एव दृश्यते, तत्र चान्धकारेष्वान्ध्यहेतुत्वमपह्नुत्यान्यत्र तन्निवेशितम्।

यथा तथा भूतेव विभातीत्यन्वयः। इन्दुमण्डलादावित्यादिपदात् पुष्परसादिपरिग्रहः। सूक्तादिष्विति, सूक्तिमाधुर्यादिष्वित्यर्थः; आदिना अधरमाधुर्यपरिग्रहः। निवेशनात् अभेदाध्यवसानात्।

जानेइति, दमयन्तीं वर्णयतो नलस्योक्तिः। अतिशयितात् रागाल्लौहित्यादिदमधरस्वरूपमेव बिम्बमिति जाने, न तु बिम्बफलमितिएवकारार्थः। बिम्बस्य बिम्बफलस्यातोऽस्मादोष्ठादधरत्वं निकृष्टत्वं स्फुटं कथं तर्हि विपरीतालोके प्रसिद्धिस्तत्राह—द्वयोरनयोर्विशेषस्य तारतम्यस्यावगमे बोधेऽक्षमाणामसमर्थानां जनानां नाम्नि भ्रमो विपर्यासः, अभूदिति, अन्यत्रेति, सूर्यकतके नेत्रापरपर्याय इत्यर्थः निवेशितम् उत्प्रेक्षितम्।

फलोत्प्रेक्षायां यथा—

रवितप्तो गजः पद्मान्तद्‌बान्धवान् बाधितुं ध्रुवम्।
सरो विशति न स्नातुं गजस्नानं हि निष्फलम्॥

अत्र गजस्य सरःप्रवेशं प्रति फले स्नाने फलत्वमपह्नुत्य पद्मबाधने तन्निवेशितम्। अलमनया प्रसक्तानुप्रसक्त्या प्रकृतमनुसरामः॥

भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम्।
अन्यदेवास्य गाम्भीर्य्यमन्यद्धैर्य्यं महीपतेः॥

अत्र लोकप्रसिद्धगाम्भीर्य्याद्यभेदेऽपि भेदो वर्णितः॥

रवीति, रविणा सन्तप्तो गजः तस्य रवेर्गृह्यान् पक्ष्यान् बन्धूनिति यावत्। ध्रुवं प्रायो बाधितुं सरः प्रविशति न तु स्नातुं स्नानार्थं हि यस्माद्गजस्य स्नानं निष्फलं निःप्रयोजनमित्यन्वयः। प्रसक्तानुप्रसक्त्येति, अतिशयोक्तेः सापह्नवत्वकथनप्रसङ्गादलङ्कारसर्वस्वउक्तं स्वरूपोत्प्रेक्षायां शुद्धापह्नुतिगर्भत्वं दर्शितं, तदनुप्रसक्त्या च त्रिविधास्वप्युत्प्रेक्षासु पर्य्यस्तापह्नुतिगर्भत्वमित्यर्थः। भेदकेति, तस्यैव तज्जातीयस्यैव अन्यत्ववर्णनं तज्जातीयभिन्नत्वेन वर्णनम् तच्चाहार्य्यं बोध्यम्। एवमग्रेऽपि, तेन भ्रान्तौ नातिव्याप्तिः; इदञ्च लोकोत्तरत्वप्रतिपत्त्यर्थम्। अन्यदेवेति, अस्य महीपतेर्गाम्भीर्य्यम् अन्यदेव प्रसिद्धगाम्भीर्य्यभिन्नमेवेत्यर्थः। अन्येयमिति, रूपं सौन्दर्य्यं; वैदग्ध्यं चातुर्य्यं धोरणी परिपाटी; एषा नलिनपत्राक्षी; विधेः साधारणी सृष्टिः नैवेत्यन्वयः। अत्रोत्तरार्धे नञ्भङ्ग्याऽन्यत्ववर्णनं विशेषः।

यथा वा–

अन्येयं रूपसम्पत्तिरन्या वैदग्ध्यधोरणी ।
नैषा नलिनपत्राक्षी सृष्टिः साधारणी विधेः ॥

सम्बन्धातिशयोक्तिः स्यादयोगे योगकल्पनं
सौधाग्राणि पुरस्याऽस्य स्पृशन्ति विधुमण्डलम् ।

यथा वा --

कतिपयदिवसैः क्षयं प्रयायात्
कनकगिरिः कृतवासरावसानः ।
इति मुदमुपयाति चक्रवाकी
वितरणशालिनि वीररुद्रदेवे ॥

सम्बन्धेति, अयोगे असम्बन्धे योगकल्पनं सम्बन्धवर्णनं सम्बन्धस्याभेदभिन्नत्वे सत्यन्यत्वाद्यनिरूपितो ग्राह्यः, तेन रूपकातिशयोक्त्यादिप्रभेदेषु नातिव्याप्तिः । सौधेति, 'सौधो स्त्री राजसदन मित्यमरः । नन्वत्रैव 'स्पृशन्तीवेन्दुमण्डलमितीवपदप्रयोगे उत्प्रेक्षाप्रतीतेस्तदप्रयोगे गम्योत्प्रेक्षात्वमुचितम् । इवादिसत्त्वे या वाच्योत्प्रेक्षा सैवेवाद्यभावे गम्योत्प्रेक्षेति नियमात्, अन्यथा 'त्वत्कीर्तिर्भ्रमणश्रान्तेत्यादि पूर्वोदाहृते पद्येऽपि गम्योत्प्रेक्षा न स्यादिवाद्यभावादिति ? चेत्—मैवम् ; उपदर्शितनियमस्यालङ्कारान्तराविषय एवाभ्युपगमात् ; अन्यथा नूनं मुखं चन्द्र इत्यादौ नूनमित्यप्रयोगे गम्योत्प्रेक्षापत्तेः ; एवं च प्रकृते सम्बन्धे असम्बन्धवर्णनम् ।

रूपकातिशयोक्त्यलङ्कारविषये न गम्योत्प्रेक्षावसरः । त्वत्कीर्तिरित्युदाहरणे तु भ्रमणश्रान्तत्वरूपधर्मत्वं शोगम्योत्प्रेक्षाभि-

अत्र चक्रवाक्याः सूर्यास्तसमयकारकमहामेरुलय-सम्भावनाप्रयुक्तसन्तोषासम्बन्धेऽपि तत्सम्बन्धो वर्णितः।

योगेऽप्ययोगोऽसम्बन्धातिशयोक्तिरितीर्यते।

त्वयि दातरि राजेन्द्र! स्वर्द्रुमान्नाद्रियामहे॥

अत्र स्वर्द्रुमेष्वादरसम्बन्धेऽपि तदसम्बन्धो वर्णित इति असम्बन्धातिशयोक्तिः॥

यथा वा—

अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः।

अवकाशो न पर्य्याप्तस्तव बाहुलतान्तरे॥

प्रेता, न तु स्वर्गङ्गाप्रवेशांशइति सर्वमवदातम्। असन्दिग्धमुदाहरणान्तरमाह—यथावेति, कतिपयेति, वीररुद्रदेवाख्ये नृपे वितरणशालिनि दानशालिनि सति चक्रवाकी इति मुदं सन्तोषमुपयाति प्राप्नोति इति किं कृतम्, वासरस्यावसानं नाशो येन सः, कनकगिरिः सुमेरुः, कतिपयैरल्पैर्दिवसैः क्षयं प्रयायादिति सम्भावनार्थां लिङ्।

योगेपीति, योगे सत्यप्ययोगवर्णनमित्यर्थः। स्वर्गस्था द्रुमाः कल्पवृक्षादयः स्वर्द्रुमेष्विति विषयसप्तमी स्वर्द्रुमविषये य आदरस्तस्य सम्बन्धेपि अर्थादर्थिषु यद्वा अर्थिषु स्वर्द्रुमविषयादरसम्बन्धाभावप्रतीतौ तत्समानवित्तिवेद्यतया स्वर्द्रुमेष्वप्यादरविषयत्वाभावावगमाद्यथाश्रुतमेव साधु। अनयोरिति, अनवद्यानि निर्दुष्टान्यङ्गानि यस्यास्तथाभूतेइति सम्बोधनं, जृम्भमानयोर्वर्द्धमानयोरनयोस्तनयोस्तव बाहुलतयोरन्तरे मध्ये पर्याप्तः अवकाशो नास्तीत्यन्वयः; अत्र बाहुलतयोरन्तरे स्तनपर्याप्ता-

अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्य्ययोः।
आलिङ्गन्ति समं देव ! ज्यां शराश्च पराश्च ते॥
अत्र मौर्व्यां यदा शरसन्धानं तदानीमेव शत्रवः।
क्षितौ पतन्तीति हेतुकार्य्ययोः सहत्वं वर्णितम्॥

यथा वा –

मुञ्चति मुञ्चति कोशं–
भजति च भजति प्रकम्पमरिवर्गः।
हम्मीरवीरखड्गे त्यजति त्यजति क्षमामाशु॥

अत्र खड्गस्य कोशत्यागादिकाल एव रिपूणा-न्धनगृहत्यागादिर्वर्णितः।

चपलातिशयोक्तिस्तु कार्य्ये हेतुप्रसक्तिजे।
यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका॥

वकाशसम्बन्धेऽपि तदसम्बन्ध उक्तः। अक्रमेति, क्रमः पौर्वापर्यं तदभावोऽक्रमस्तद्रूपस्यातिशयस्योक्तिरित्यर्थः। सहत्वे समकालत्वे आलिङ्गति समं युगपज्ज्यां मौर्वीं पृथ्वीं च पराः शत्रवः॥

मुञ्चतीति, हम्मीरसंज्ञकस्य वीरस्य खड्गे कोशं पिधानं मुञ्चति सति अरीणां वर्गः समूहोऽपि कोशं भाण्डारं मुञ्चति तथा खड्गे कोशं पिधानं मुञ्चति सति अरीणां वर्गः समूहोऽपि कोशं भाण्डारं मुञ्चति, तथा खड्गे प्रकम्पमुल्लासनं भजति सति सः प्रकृष्टं कम्पं भजति एवं खड्गे क्षमाङ्गान्तिं त्यजति सति क्षमां पृथ्वीं त्यजतीत्यर्थः। 'कोशो स्त्री कुड्मले खड्गे पिधाने अर्थौघदि-व्ययोरित्यमरः। अत्र शतृ प्रत्ययभङ्ग्या यौगपद्यवर्णनं विशेषः।

अत्र नायकप्रवासप्रसक्तिमात्रेण योऽपितोऽतिकार्श्यं कार्य्यमुखेन दर्शितम्। यथा वा—

आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितम्।
लाक्षारञ्जनवार्तयापि सहसा रक्तान्तलं पादयोः॥
अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदावहम्।
हन्ताधीरदृशः किमन्यदलकामोदोऽपि भारायते॥

धनगृहेति, धनसम्बन्धिगृहे इत्यर्थः। चपलेति, हेतोः प्रसक्तिर्ज्ञानं तज्जन्ये कार्य्ये सतीत्यर्थः। यास्यामीति, उदिते उक्ते प्रियेणेति शेषः। तन्वया ऊर्मिका अङ्गुलीयकस्वलयः कङ्कणमभवदित्यर्थः। 'ऊर्मिका त्वङ्गुलीये स्याद्वस्त्रभङ्गतरङ्गयोरिति विश्वः। कार्य्यमुखेनेति, अङ्गुलीयकस्य कङ्कणपदप्राप्तिरूपकार्य्यवर्णनद्वारेणेत्यर्थः॥

आदातुमिति, सहजसौकुमार्यवत्याः विरहदशायां तदतिशयवर्णनमिदम्। हन्तेति खेदे, आदातुं, गृहीतुं सकृदेकवारमपि, कुसुमे ईक्षिते सति अधीरदृशः हस्ताग्रमालोहितं भवतीति शेषः; अपिना किमु गृहीते इति गम्यते लाक्षया यत् रञ्जनं तद्वार्तयापि सहसा अकस्मात् पादयोस्तलं रक्तं भवति किमु रञ्जनेनेति पूर्ववत्; एवमङ्गानां चन्दनादिना यदनुलेपनं तत्स्मरणमपि अत्यन्तखेदकरं किमुतानुलेपनं किमन्यत् वाच्यमिति शेषः; अलकानामगरुधूपाद्यामोदोऽपि भारायते भारइवाचरतीत्यर्थः, कर्तरि क्यङ् अत्रादानादि रूपहेतुप्रसक्तिमात्रेण हस्ताग्रलौहित्यादिरूपकार्य्योत्पत्तेः साक्षादेव वर्णनं न तु कार्य्यमुखेनेति पूर्वस्माद्भेदः हेतुकार्य्ययोरिव॥ हेतुप्रसक्तिकार्य्ययोरपि समकालत्वं सम्भवतीति सूचयितुं उदाहरणान्तरमाह—

यामि न यामीति धवे वदति पुरस्तत्क्षणेन तन्वङ्ग्याः।
गलितानि पुरो वलयान्यपराणि तथैव दलितानि॥

अत्यन्तातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमे।
अग्रे मानो गतः पश्चादनुनीता प्रियेण सा॥

यथा वा—

कवीन्द्राणामासन् प्रथमतरमेवाङ्गणभुव-
श्चलद्भृङ्गासङ्गाकुलकरिमदामोदमधुराः।

यामीति, धवे दयिते यामि न यामीति वदति सति तत्क्षणेन तत्कालमेव तन्वङ्ग्याः पुरोवलयानि अग्रिमकङ्कणानि पुरः प्रथमं गलितानि, अपराण्यपि तथैव तत्कालमेव दलितानि भग्नानीत्यन्वयः; 'पुरोऽग्रे प्रथमे च स्यादिति विश्वः। अत्र वदति गलितानीति शतृप्रत्ययेन समकालतावगतिः। अत्यन्तेति, अत्र हेतुकार्ययोरित्यनुवर्तते। तत्पौर्वापर्येति क्वचित्पाठः साधुरेव। व्यतिक्रमो अत्र वैपरीत्यम्, अग्रे प्रथमं अनुनीता समाहिता कवीन्द्राणामिति कविश्रेष्ठानामङ्गणसम्बन्धिन्यो भूमयः प्रथमतरमेव प्रथममेव; चलतां चपलानां भृङ्गाणां भ्रमराणामासङ्गेनाकुलानां करिणां मदजलस्यामोदेन परिमलेन मधुरा रमणीया आसन् अभवन्, पश्चादनन्तरन्तेषां कवीनामुपरि रुद्रसंज्ञकस्य नृपतेः अमी दृश्यमानाः कटाक्षाः पतिताः कीदृशाः? क्षीरमुदकं यस्य तथाभूतस्य क्षीरार्णवस्य प्रसरन्तीनामुदवीचीनां बृहत्तरङ्गाणां सहचरास्तत्सदृशा इत्यर्थः। 'उदकस्योदः संज्ञाया मितुरदादेशः। अत्र यथोक्तकटाक्षरूपकार्यमुखेन नृपतिप्रसादरूपहेतुकथनं पूर्वस्माद्विशेषः। एताः अव्यवहितोक्ताः अर्थोक्तेषु प्रभेदेषु अनुगतप्रवृत्तिनिमित्ता-

अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः
कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः॥

एतास्तिस्रोऽप्यतिशयोक्तयः कार्य्यशैघ्र्यप्रत्यायनार्थाः॥ १३॥

भावात्कथमतिशयोक्तिपदप्रयोग इति चेत्—अत्राहुः—तावत्प्रभेदान्यतमत्वमेव सर्वानुगतमतिशयोक्तिपदप्रवृत्तिनिमित्तम्, तदेव च सामान्यलक्षणमिति, तस्मात्तु निगीर्याध्यवसानमेवातिशयोक्तिः प्रभेदान्तरं त्वनुगतरूपाभावादलङ्कारान्तरमेव। न चान्यत्वादिप्रभेदेषु अन्यत्वादिभिरभेदादीनां निगरणं सम्भवतीति वाच्यम्। अन्यत्वादिभिरभिन्नवस्तुप्रतीतेरेव चमत्कारित्वेनानुभवसिद्धतयान्यत्वादिभिरभेदप्रतीत्यङ्गीकारेऽनुभवासङ्गतेः। अन्यतमत्वन्तु नालङ्कारविभाजकोपाधितां भजते, चमत्काराप्रयोजकत्वादिति वदन्ति।

वस्तुतस्तु रूपकभिन्नत्वे सति चमत्कृतिजनकाहार्यारोपनिश्चयविषयत्वमेवातिशयोक्तिसामान्यलक्षणम्। रूपकवारणाय सत्यन्तं, भ्रान्तिवारणायाहार्येति, उत्प्रेक्षानिरासाय निश्चयेति, रूपकातिशयोक्तावभेदस्य द्वितीयप्रभेदेऽन्यत्वस्य तृतीये सम्बन्धस्य चतुर्थे असम्बन्धस्य पञ्चमे सहत्वस्य षष्ठे हेतुप्रसक्तिजन्यत्वस्य सप्तमे पूर्वापरत्वयोश्च तथाविधारोपविषयत्वात्सर्वत्र लक्षणसमन्वयः। नचैवंविधारोपस्य रूपकस्वभावोक्तिभिन्नेषु प्रायशः सर्वालङ्कारेषु सत्त्वादतिप्रसङ्ग इति वाच्यम्। इष्टापत्तेः। अलङ्कारान्तराणां चमत्कारे प्रधानतया तदङ्गत्वे नावस्थिताया अतिशयोक्तेरप्राधान्येन व्यपदेशानर्हत्वात् 'प्राधान्येन व्यपदेशा

भवन्तीति, न्यायात् अलङ्कारान्तराणामिव प्रधानत्वेन व्यपदेशार्हत्वात्। अतएव काव्यप्रकाशकृता विशेषालङ्कारप्रसङ्गेऽभिहितं —'सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते तां विना प्रायेणालङ्कारत्वाभावात्। अतएवोक्तम्—

सैषा सर्व्वत्रवक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्याङ्कविभिः कार्य्यः कोऽलङ्कारोऽनया विनेति॥

दण्डिनाप्युक्तम्—

अलङ्कारान्तराणामप्येकमाहुः परायणम्।
वागीशमहिता मुक्तिमिमामतिशयाह्वयामिति॥ १३॥

इति श्रीमत्तत्सदुपाख्यवैद्यनाथकृतायामलङ्कारचन्द्रिकायां श्रीमद्रङ्गराजाध्वरीन्द्रसूनुश्रीमदप्पयदीक्षितकृत-कुवलयानन्दटीकायामतिशयोक्तिप्रकरणं सम्पूर्णम्

॥ इत्यतिशयोक्तिनाम त्रयोदशालङ्कारः॥

वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता।
सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च॥
त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते।
मालती शशभृल्लेखा कदलीनां कठोरता॥

तुल्ययोगितां लक्षयति—वर्ण्यानामिति, वर्ण्यत्वेन प्रस्तुतानामित्यर्थः, इतरेषाम् अप्रस्तुतानाम्, एतच्चोभयमपि सावधारणं वर्ण्यानामेव इतरेषामेव वेत्यर्थः, बहुवचनमनेकार्थकं द्वयोर्धर्मैक्यस्यापि संग्राह्यत्वात्। धर्मैक्यं धर्मस्य ऐक्यम् एकत्वम् एको धर्म इति यावत्, स च चमत्कारकारी बोध्यः एवञ्चानेकप्रस्तुतमात्रसम्बद्धैकचमत्कारिधर्मानेकाप्रस्तुतमात्र-सम्बद्धैकधर्मान्यतरत्त्वं लक्षणं बोध्यम्। 'मुखं विकसितस्मितमित्यादावतिप्रसङ्गवारणायानेकेति, अत्र च मुखप्रेक्षितादिरूपानेकवर्ण्यसम्बन्ध्यानेको धर्म इति तन्निरासः। दीपकवारणाय मात्रेति, प्रस्तुताप्रस्तुत प्रभेदसाधारण्यायान्यतरत्त्वनिवेशः।

त्वदङ्गेति, प्रियां प्रति दयितोक्तिः। तवाङ्गस्य मार्दवे सौकुमार्ये दृष्टे सति कस्य चित्ते मालत्यादीनां कठोरता न भासते, अपि तु सर्वस्यैवेत्यर्थः, शशम्बिभर्तीति शशभृच्चन्द्रस्तस्य लेखा कला। गुणक्रियारूपेति, एतच्च तथाविधधर्मस्य प्रायशो गुणक्रियारूपत्त्वमित्यभिप्रेत्योक्तं, न तु लक्षणे तेन रूपेण धर्मस्य निवेशः, गौरवात् प्रयोजनाभावाच्च, यत्तु कैश्चिदेतद्ग्रन्थदूषणलालसैर्धर्मस्य गुणक्रियारूपत्त्वेन लक्षणे निवेश इत्याशयमारोप्याभिहितं तदेतदापाततः—'शासति त्वयि हे राजन्! अखण्डावनिमण्डलम्। न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः॥'-इत्यत्राभावरूप धर्म-

प्रस्तुतानामप्रस्तुतानां वा गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता। सङ्कुचन्तीति प्रस्तुततुल्ययोगितायाा उदाहरणम्। तत्र प्रस्तुतचन्द्रोदयकार्यतया वर्णनीयानां सरोजानां प्रकाशभीरुस्वैरिणीवदनानाञ्च सङ्कोचरूपैकक्रियान्वयो दर्शितः उत्तरश्लोके नायिकासौकुमार्यवर्णने प्रस्तुते अप्रस्तुतानां मालत्यादीनां कठोरतारूपैकगुणान्वयः।

यथा वा—

सञ्जातपत्रप्रकरान्वितानि
समुद्वहन्ति स्फुटपाटलत्वम्।

स्वैराान्वयादिति। तदिदमापाततोऽपि न मनोरमं तथाहि—शासतीति तदुदाहृतपद्ये निश्चिन्तेनेति निश्चिन्तभेदः सत् मित्र मण्डलधर्मतयोपात्तः, स च गुणस्वरूपएव चिन्ताभाववद्भेदस्य चिन्तानतिरिक्तत्वात्, अन्यथा चिन्ताभावाभावस्याप्यतिरिक्तत्वापत्तेः;अथ तत्रापि वैपरीत्यादिष्टापत्तिमाश्रयमे? भवत्वेवं तुष्यतु भवान्! एवमप्यभावस्य कथं गुणवहिर्भावः? जातिक्रियाद्रव्यातिरिक्तस्यैव चतुष्टयीशब्दानां प्रवृत्तिरितिवदद्भिर्वैयाकरणैस्तदनुसारिभिरालङ्कारिकैर्गुणत्वाङ्गीकारात्; अतएव जातिगुणयोर्विरोधे प्रकाशकृद्भिरुदाहृतं 'गिरयोऽप्यनुन्नतियुज इति, तथा विश्वनाथेनापि 'असदः सार्व्वभौमोपीति। वस्तुतस्तु लक्षणे न तेन रूपेण धर्मस्य निवेशोऽभिप्रेत इत्यावेदितमते न काप्यनुपपत्तिरिति। स्वैरिणी स्वेन ईरितुं शीलमस्यास्तादृशी व्यभिचारिणीति यावत्, 'स्वादीरेरिणोरिति वृद्धिः 'स्वैरिणीपांसुला च स्यादिय-

विकस्वराण्यर्ककराभिमर्शाद्-
दिनानि पद्मानि च वृद्धिमीयुः॥
नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात् कदलीविशेषाः।
लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्वोरुपमानबाह्याः॥

भरः। सञ्जातेति, दिनानि पद्मानि च वृद्धिमीयुः प्रापुः, कीदृशानि ? सञ्जातैः पत्राणां प्रकरैः समूहैरन्वितानि, पूर्व्वपत्राणां वसन्तेन विगलनात् तथा स्फुटा विकसिताः पाटला वृक्षविशेषा येषु तानि तेषां भावस्तत्त्वं, समुद्दधन्तीपि शत्रन्तं दधानानीत्यर्थः। पद्मपक्षे तु स्फुटानि विकसितानि च तानि पाटलानि पाटलवर्णानि तेषां भावस्तत्त्वमित्यादि पूर्व्ववत्; एवमर्कस्य करैः किरणैरभिमर्शनाद्विकस्वराणि भासुराणि दिनानि पद्मानि तु विकासशालीनि॥

नागेन्द्रेति, नागेन्द्राणां गजश्रेष्ठानां हस्ताः शुण्डाः कदलीविशेषाश्च परिणाहो विशालता तच्छालि रूपं स्वरूपं लब्ध्वापि यथाक्रमं त्वचि कर्कशत्वात् कठोरत्वादेकान्तेन नियमेन शैत्याच्च हेतोर्लोके तस्याः पार्व्वत्याः ऊर्व्वोः उपमानाद्बाह्याः उपमानत्वरहिता जाता इत्यन्वयः। तदीयत्वेनेति, तत्कालिकत्वेनेत्यर्थः। ग्रीष्मकालिकवस्तु वर्णनस्यैव ग्रीष्मवर्णनरूपत्त्वादिति भावः। एकक्रियेति, वृद्धिप्राप्तिरूपैकक्रियान्वय इत्यर्थः; एकगुणेति, उपमानबाह्यत्वरूपैकगुणेत्यर्थः; हिताहिते इति, हिताहितविषये इत्यर्थः; वृत्तितौल्यमिति, वृत्तिर्वर्तनं व्यवहरणमिति यावत्तस्य

अत्र ग्रीष्मवर्णने तदीयत्वेन प्रस्तुतानां पद्मानामेकक्रियान्वयः। ऊरुवर्णने अप्रस्तुतानां करिकराणां कदलीविशेषाणामेकगुणान्वयः।

हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता।
प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया॥

अत्र हिताहितयोर्मित्रशात्रवयोरुत्कृष्टभूतिदानस्य पराभवदानस्य च श्लेषेणाभेदाध्यवसायाद्वृत्तितौल्यम्।

यथा वा—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः॥

अत्र वृश्चति सिञ्चत्यर्चति इत्यध्याहारेण वाक्यानि पूरणीयानि। पूर्वोदाहरणं स्तुति पर्यवसायि, इदन्तु निन्दापर्यवसायीति भेदः।

तौल्यं साम्यम्, अपरा पूर्व्वोक्तविलक्षणा ; प्रदीयत इति,परा उत्कृष्टा भूतिः सम्पत्तिरेव पराभूतिः पराभवः, शत्रूणां समूहः शात्रवं 'तस्य समूहे' इत्यण्।

पराभवदानस्येति, शत्रुसम्बन्धिपराभवसम्पादनस्येत्यर्थः पराभवस्य मुख्यदानासम्भवात् अतएव सम्प्रदानत्वासम्भवात् ; मित्रशात्रवयोरिति, सम्बन्धसामान्ये षष्ठी; श्लेषेण पराभूतिश्लेषेण। यथावेति। अत्र च शब्दा अप्यर्था विरोधद्योतकाः। अत्रेति, योऽपि निम्बं परशुना छिनत्ति, योऽप्येनं मधुयुक्तेन सर्पिषा आज्येन सिञ्चति,योप्येनं गन्धमाल्याद्यैरर्चति-इति क्रमेणेत्यर्थः। उक्तपूर्वा-

रस्य तुल्ययोगितापदवाच्यत्वे वृद्धसम्मतिं दर्शयति—इयमिति, तथाच वृद्धव्यवहाराम्नानार्थस्तुल्ययोगिताशब्द इति भावः। अत्र केचिदाहुः—नेयं तुल्ययोगिता पूर्वोक्ततुल्ययोगितातोभेदमर्हति 'वर्ण्यानामितरेषां वेत्यादिपूर्वोक्तलक्षणाक्रान्तत्वात् एकानुपूर्विबोधितवस्तुकर्म्मकदानमातृत्वस्य परम्परया तादृशशब्दस्य वा धर्म्मस्यैक्यात्, यत्र निम्बमित्यत्रापि कटुत्वविशिष्टनिम्बस्यैव परम्परयाच्छेदकसेचकपूजकधर्म्मत्वसम्भवादिति तदेतत्पेशलम्; तथाहि—यत्रानेकान्वयित्वेन ज्ञातो धर्म्मस्तेषामौपम्यगमकत्वेन चमत्कृतिजनकस्तत्र पूर्व्वोक्तप्रकारः यत्र तु हिताहितोभयविषयकशुभाशुभरूपैकव्यवहारस्य व्यवहर्त्तृगतस्तुतिनिन्दान्यतरद्योतकतया चमत्कृतिजनकत्वं तत्रापर इति भेदात् न ह्यत्र पराभूतिशब्दस्य तदर्थकर्म्मदानस्य वा परम्परया शत्रुमित्रगतत्वेन भानम् अपि तु श्लेषबलादेकत्वेनाध्यवसितस्य तादृशदानस्य राजगतत्वेनैवेति कथं पूर्व्वोक्तलक्षणाक्रान्तत्वम्। एतेन यत्र निम्बमित्यत्र कटुत्वविशिष्टनिम्बस्यैव परम्परया छेदकसेचकपूजकधर्म्मत्वमिति निरस्तम्; वस्तुगत्या तद्धर्म्मत्वस्यालङ्कारतासम्पादकत्वाभावात्। अन्यथा सङ्कुचन्ति सरोजानीत्येतावतैव तुल्ययोगितालङ्कारपत्तेः किन्त्वनेकगतत्वेन ज्ञायमानधर्म्मत्वस्यैव तुल्ययोगिताप्रयोजकत्वमिति तदभावे तदन्तर्गतिकथनमसमञ्जसमेव। अथाप्युक्तोदाहरणयोस्तथा भानमस्तीत्याग्रहस्तथापि न पूर्वोक्तलक्षणस्यात्र सम्भवः, 'धर्मोऽर्थ इव पूर्णश्रीस्त्वयि राजन्! विराजते'-इति प्रकृतयोरुपमायामतिव्याप्तिवारणार्थमनेकानुगतधर्म्मत्व-पर्य्याप्तविषयिता-सम्बन्धावच्छिन्नावच्छेदकताकचमत्कृतिजनकताश्रयज्ञानविषयधर्मत्वमिति विवक्षायास्तत्रावश्यकत्वात्,

इयं सरस्वतीकण्ठाभरणोक्ता तुल्ययोगिता—

गुणोत्कृष्टैः समीकृत्य वचोन्या तुल्ययोगिता।
लोकपालो यमः पाशी श्रीदः शक्रो भवानपि॥

अत्र वर्णनीयो राजा शक्रादिभिर्लोकपालत्वेन समीकृतः।

यथा वा—

सङ्गतानि मृगाक्षीणां तडिद्विलसितान्यपि।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम्॥

पूर्वत्र स्तुतिरिह तु निन्दा इयं काव्यादर्शे दर्शिता। इमां तुल्ययोगितां सिद्धिरिति केचिद्व्यवजह्रुः।

प्रकृते च हितत्वाहितत्वादेर्विषयस्याधिकस्यानुप्रवेशादिति विभावनीयम्॥

गुणोत्कृष्टैरिति, गुणैरुत्कृष्टाः श्रेष्ठास्तैरित्यर्थः; समीकृत्य साम्यं विवक्षित्वा; वच इति, वचनं वचः प्रतिपादनमिति यावत् अर्थात्साधारणधर्मस्य; अन्येति, धर्मस्य वर्ण्यावर्ण्यगतत्वादुक्तविलक्षणेत्यर्थः; पाशोऽस्यास्तीति पाशी 'वरुणः पाशी'त्यमरः। श्रीदः कुबेरः, शक्र इन्द्रः, लोकपालपदञ्चेन्द्रादिषु रूढं राज्ञि तु योगमात्रेण प्रयुक्तम्। सङ्गतानीति, सङ्गतानि सङ्गमाः तडितां विद्युतां विलसितानि घनं निविडं यथा स्यात् तथा आरब्धानीति, सङ्गमपक्षे घनैर्मेघैरारब्धानीति च तडिद्विलसितपक्षेऽर्थः काव्यादर्शे एतन्नामकदण्डिकृतग्रन्थे दर्शिता तुल्ययोगितापदवाच्यत्वेन निर्दिष्टा केचित् आलङ्कारिकाः व्यवजह्रुः व्यवहृतवन्तः॥

यदाह जयदेवः—

सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये ।
युवामेव हि विख्यातौ त्वं बलैर्जलधिर्जलैः ॥

इति मतान्तरेष्वत्र वक्ष्यमाणं दीपकमेव ॥१४॥

ख्यातेषु गुणत्वेन प्रसिद्धेषु । युवामेवेति, इह—भूलोके, बलैः सैन्यैः अत्र च सैन्यजलयोः प्रसरणशीलत्वादिसादृश्याद्बिम्बप्रतिबिम्बभावेनाभेदमाश्रित्य धर्मैक्यं बोध्यम् । मतान्तरेष्विति, बहुवचनेन बहुसम्मततया दण्डाक्ततुल्ययोगितायामस्वरसो ध्वन्यते स च दीपकतुल्ययोगितयोर्भेदकथनावसरे व्यक्तीभविष्यतीति सङ्क्षेपः ॥ १४ ॥

इति श्रीमत्तत्सदुपाख्यवैद्यनाथकृतायामलङ्कारचन्द्रिकाख्यायां कुवलयानन्दटीकायां तुल्ययोगिताप्रकरणम् ।

—:०:—

इति तुल्ययोगितानाम चतुर्दशालङ्कारः ॥

वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः ।
मदेन भाति कलभः प्रतापेन महीपतिः॥

प्रस्तुताप्रस्तुतानामेकधर्मान्वयो दीपकम्,

यथा—महीपालकलभयोः प्रस्तुताप्रस्तुतयो र्भान-क्रियान्वयः ।

यथा वा—

मणिः शाणोल्लीढः समरविजयी हेतिदलितो
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥

दीपकं लक्षयति—वदन्तीति, वर्ण्यावर्ण्यान्वितैकचमत्कारि-धर्मो दीपकमित्यर्थः । उपमादिवारणायात्रापि पूर्ववल्लक्षण-परिष्कारो बोध्यः । कलभः करिशावकः । भानक्रियेति, क्रिया-रूपैकधर्मान्वय इत्यर्थः ।अत्रापि क्रियाविशेषणीभूतयोर्मदप्रता-पयोर्बिम्बप्रतिबिम्बभावो बोध्यः ।

यथावेति,शाणेन निकषपाषाणेनोल्लीढ उल्लिखितो मणिः,तथा हेतिभिरायुधैर्निहतः क्षतक्षतः। समरे संग्रामे विजयशीलो योद्धा मदेन क्षीणो नागो हस्ती। शरत्काले—श्यानानि शुष्काणि पुलि-नानि=जलनिर्मुक्ततटानि यासां ताः। सरितो नद्यः। कलामात्रा-वशिष्टश्चन्द्रः सुरते मृदिता चुम्बनालिङ्गनाद्युपमर्दम्लायिताङ्गी बाला नवयौवना वनितास्त्री एवमर्थिषु याचकेषु गलितः संक्रान्तो विभवः स समृद्धिर्येषां ते नृपाश्च, तनिम्ना तनोः कृशस्य भाव-स्तनिमा कार्श्यं तेन शोभन्त इत्यन्वयः। "शाणस्तु निकषः

अत्र प्रस्तुतानां नृपाणामप्रस्तुतानां मख्यादीनां च शोभैकधर्मान्वयः, प्रस्तुतैकनिष्ठः समानोधर्मः प्रसङ्गादन्यत्रोपकरोति प्रासादार्थं मारोपितो दीप इव रथ्यायामिति दीपसाम्याद्दीपकं सञ्ज्ञायां चेति इवार्थे कन्प्रत्ययः।

यद्यपि, सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥

—इत्यत्र प्रस्तुतानामप्रस्तुतानां युगपद्धर्मान्वयः तथापि

कथ" इत्यमरः। शोभैकेति, शोभारूपैकधर्मेत्यर्थः। पूर्वोदाहरणे आदिदीपकम् इदन्त्वन्तदीपकमिति भेदः। प्रस्तुताप्रस्तुतसाधारणधर्मस्य दीपकपदवाच्यतायां बीजमाह—प्रस्तुतैकेत्यादि, प्रस्तुतैकनिष्ठः प्रस्तुतैकपरः प्रस्तुतान्वयविवक्षयाभिहित इति यावत्। रथ्यायामिवेत्यनन्तरमुपकरोतीत्यनुषज्यते। इतीति चाध्याहार्यम्, इति दीपकसादृश्यात् समानो धर्मो दीपकमुच्यत इति शेषः; यत्र धर्मस्य पूर्वं प्रस्तुतेऽन्वयः पश्चादन्यत्र यथोक्तोदाहरणयोस्तत्रैवेतरत्र प्रसङ्गोपकारित्वमित्याशयेन शङ्कते—यद्यपीति; सुवर्णेति,सुवर्णमेव पुष्पं यस्या इति विग्रहः; त्रयः, गुणत्रयान्यतमयुक्ताः शूरश्चेत्यादिप्रत्येकं चकारो नैरपेक्ष्यद्योतकः; कृतविद्यः प्रख्यातविद्यः; एतच्च प्रासङ्गिकं पद्यं यदा यत्प्रसङ्गे पठ्यते तदा तस्य प्रस्तुतत्वमितरयोस्त्वप्रस्तुतत्वमिति बोध्यम्। युगपदिति, त्रयश्चिन्वन्तीति, त्रिष्वपि युगपदन्वय इत्यर्थः। चिन्वन्तीति, बहुवचनान्तस्य प्रस्तुतमात्रे एकवचनान्तेन पूर्वमन्वयायोगादिति भावः। समाधत्ते—तथापीति, प्रासङ्गिकत्वं प्रस-

प्रासङ्गिकत्वं न हीयते; वस्तुगत्या प्रस्तुतोद्देशेन प्रस्तुतस्यैव वर्णनस्याप्रस्तुतेऽन्वयात् ॥

न हि दीपस्य रथ्याप्रासादयोर्युगपदुपकारत्वेन जामातर्थं अर्पितस्य सूपस्यातिथिभ्यः प्रथमपरिवेषणेन च प्रासङ्गिकत्वं हीयते, तुल्ययोगितायां त्वेकं प्रस्तुतमन्यदप्रस्तुतमिति विशेषाग्रहणात्सर्वोद्देशेनैव धर्मान्वय इति विशेषः ॥

ङ्गोपकारित्वं; न हीयत इति तथाच धर्मस्य पश्चादन्वयो न तत्र प्रयोजक इति भावः। किन्तर्हि प्रयोजकं तत्राह—वस्तुगत्येति, प्रस्तुतोद्देशेन प्रस्तुतोद्देशकान्वयबोधेच्छया प्रवृत्तस्यैव पदाभिहितस्यैव वर्णनस्य कर्मव्युत्पत्त्या तद्विषयधर्मस्य तथाच चमत्काराय प्रस्तुताप्रस्तुतान्वितस्यार्थं बोधयत्वितीच्छयोच्चरितपदाभिहितधर्मस्योभयत्रान्वयेऽप्युद्देश्यताख्येच्छाविषयता प्रस्तुत एव, न त्वप्रस्तुते किन्तु विशेषणताख्यविषयतैवेति तथाविधोद्देश्यताविरह एव प्रासङ्गिकत्वे बीजमित्याशयः। एतदेवोपपादयति—नहीति, प्रसङ्गिकत्वमिति, दीपसूपयोरथ्यातिथिविषये प्रसङ्गोपकारित्वमित्यर्थः; तथाच त्वन्मते तस्य प्रासङ्गिकत्वं न स्यादिति भावः। इदमुपलक्षणं जामातृविषये प्रासङ्गिकत्वापत्तिरपि बोध्या। एतदेव तुल्ययोगितातो भेदकमित्याह—तुल्ययोगितायान्त्विति।

ननूद्देश्यत्वानुद्देश्यत्वयोश्चमत्काराप्रयोजकत्वान्नालङ्कारभेदप्रयोजकत्वं युक्तमित्यस्वरसादाह—अयञ्चेति, अयं वक्ष्यमाणः, अनयोः दीपकतुल्ययोगितयोः; अत्र दीपके; उप-

अयं चानयो रपरोविशेषः—उभयोरप्यनयोरुपमालङ्कारस्य गम्यत्वाविशेषेऽप्यत्राप्रस्तुतमुपमानं प्रस्तुतमुपमेयमिति व्यवस्थित उपमानोपमेयभावस्तत्र तु विशेषाग्रहणादैच्छिकः स इति ॥१५॥

मानोपमेयभावइत्यनन्तरङ्गस्य इति शेषः। तत्र तुल्ययोगितायां विशेषाग्रहणात् प्रस्तुताप्रस्तुतत्वरूपव्यवस्थापकाभावात् ऐच्छिकः अव्यवस्थितः सः उपमानोपमेयभावः। नव्यास्तु नैतावताऽपि तुल्ययोगिताऽतो दीपकस्य पृथग्भाव उचितः, धर्म्मस्य सकृद्वृत्तित्वमूलाया विच्छित्तेरविशेषात्; अन्यथा तुल्ययोगितायामपि धर्म्मिणां केवलप्रकृतत्वस्य केवलाप्रकृतत्वस्य च विशेषस्य सत्वादलङ्कारद्वैतापत्तेः; तस्मात् तुल्ययोगिताया एव त्रैविध्यमुचितमित्याहुः ॥ १५ ॥

इत्यलङ्कारचन्द्रिकायां दीपकप्रकरणम् ॥

—:-:—

॥ इति दीपकं नाम पञ्चदशालङ्कारः ॥

त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ।
वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी ॥
उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।
माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः ॥

दीपकस्थानेकोपकारार्थतया दीपस्थानीयस्य पदस्यार्थस्योभयोर्वा वृत्तौ त्रिविधमावृत्तिदीपकं क्रमेणार्धत्रयेणोदाहरणानि दर्शितानि ॥

यथा वा—
उत्कण्ठयति मेघानां माला वर्गं कलापिनाम् ।
यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः ॥

त्रिविधमिति, दीपकस्यावृत्तौ आवृत्तिदीपकं भवेत् तच्च त्रिविधमित्यर्थः । वर्षतीति, शर्वरी रात्रिः वर्षं वत्सरइवाचरतीत्यर्थः; कदम्बानि कदम्बकुसुमानि, उन्मीलन्ति विकसन्ति, कुटजोद्गमाः कुटजकलिकाः, स्फुटन्ति विकसन्ति, तृप्ताश्चातका माद्यन्ति मत्ता भवन्ति, शिखावला मयूराश्च माद्यन्तीत्यन्वयः । त्रैविध्यमुपपादयन्नेव व्याचष्टे—दीपकस्येति, क्रमेणेति, आद्येऽर्द्धे वर्षतीति शब्दावृत्तिः, अलङ्कारसम्पादकत्वाच्च न कथितपदत्वं दोषः; द्वितीये विकासरूपस्यार्थस्यावृत्तिः, उन्मीलन्ति स्फुटन्तीति शब्दभेदेन तस्यैव बोधनात्, तृतीये तु द्वयोरावृत्तिः स्फुटैवेति; उत्कण्ठयन्तीति मेघानां माला पंक्तिः कलापिनां मयूराणां वर्गं समूहम् उत्कण्ठयति उर्ध्वं कण्ठो यस्य तादृशं करोति तथा मकरध्वजः कामः यूनान्तरुणानां मानसमुत्कण्ठयत्युत्सुकं करोतीत्यर्थभेदेऽपि शब्दावृत्तिः ।

शमयति जलधरधारा चातकयूनां तृषं चिरोपनताम्।
क्षपयति च वधूलोचनजलधारा कामिनां प्रवासरुचिम्॥
वदनेन निर्जितं तव निलीयते चन्द्रबिम्बमम्बुधरे।
अरविन्दमपि च सुन्दरि! निलीयते पाथसां पूरे॥

एवं चावृत्तीनां प्रस्तुताप्रस्तुतोभयविषयत्वाभावेऽपि दीपकच्छायापत्तिमात्रेण दीपकव्यपदेशः ॥१६॥

शमयतीति, जलधरस्य मेघस्य धारा पंक्तिश्चातकतरुणानां चिरकालमुपनतां प्राप्तां तृषं पिपासां शमयति वधूलोचनयोर्जलधारा अश्रुपंक्तिश्च कामिनां प्रवासेच्छां क्षपयतीत्येक एव नाशरूपार्थः शब्दभेदेनोक्त इत्यर्थावृत्तिः। वदनेनेति, पाथसां जलानाम्; अत्र निलीयते शब्दस्य तदर्थस्य तिरोधानस्य चावृत्तिः। ननु प्रस्तुतार्थसकृदुपात्तस्य प्रसङ्गादप्रस्तुतोपकारित्वे दीपकमित्युक्तं न चावृत्तौ तत्सम्भवतीति कथमावृत्तिदीपकमुक्तमित्याशङ्काह—एवञ्चेति, दीपस्थानीयशब्दार्थयोरावृत्तौ चेत्यर्थः। प्रस्तुताप्रस्तुतेति, अम्बुदमालादीनां विरहोद्दीपकतया केवलप्रस्तुतत्वात् चन्द्रबिम्बारविन्दयोश्च केवलाप्रस्तुतत्वादिति भावः। दीपकच्छायेति, दीपकसादृश्येत्यर्थः; तच्च प्रस्तुताप्रस्तुतोपकारयोग्यत्वं वर्षतीत्यादौ श्लेषवशेनास्तीति भावः। मात्रपदेन दीपकात् पृथगेवायमलङ्कारो न तु तत्प्रभेद इति सूचितम्; अतएव दण्डिना—'अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरित्यपि। दीपकस्थानमेवेष्टमलङ्कारत्रयं यथा' इत्युक्त्वा विकसन्ती यथाद्युदाहृतं दीपकस्थानं स्थानापन्नं सदृशमिति यावत् ॥ १६ ॥

इत्यलङ्कारचन्द्रिकायाम् आवृत्तिदीपकप्रकरणम्।

॥ इत्यावृत्तिदीपकं नाम षोड़शालङ्कारः ॥

वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता।
तापेन भ्राजते सूर्यः शूरश्चापेन राजते॥

यत्रोपमानोपमेयवाक्ययोरेकः समानो धर्मः पृथक् निर्दिश्यते सा प्रतिवस्तूपमा प्रतिवस्तु प्रतिवाक्यार्थमुपमासमानधर्मोऽस्यामिति व्युत्पत्तेः, यथाचैव भ्राजते राजत इत्येक एव धर्म उपमानोपमेयवाक्ययोः पृथग्भिन्नपादाभ्यां निर्दिष्टः।

यथा वा—

स्थिरा शैली गुणवतां खलबुध्या न बाध्यते।
रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते॥

सकृद्धर्मोक्तिप्रसङ्गादसकृद्धर्मोक्तिगम्यवाक्यार्थसादृश्यकं प्रतिवस्तूपमालङ्कारं लक्षयति—वाक्ययोरिति, द्विवचनमनेकाभिप्रायं मालानुरोधादिति बोध्यम्। एकसामान्ये एकस्मिन् समानधर्मे सति। सूरः सूर्यः। लक्षणं व्याचष्टे—यत्रेति, उपमानोपमेयेति भावप्रधानम् उपमानोपमेयभावपरयोरित्यर्थः; पृथगिति, भिन्नशब्देनेत्यर्थः। अयमेव च वस्तुप्रतिवस्तुभाव इत्युच्यते।

स्थिरेति, शैलीसद्वृत्तं रत्नमेव दीपो रत्नदीपः; अत्र पूर्वार्द्धमुपमेयवाक्यं, उत्तरार्धमुपमानवाक्यं, उभयत्र च नाशाभावरूपः समानधर्मः शब्दभेदेनोपात्तः; सामान्याभावमात्रबोधकस्यापि बाधतेरत्र नाशरूपविशेषपरत्वात् अयमेव च पूर्वोदाहरणाद्भेदः।

यथा वा —

तवामृतस्यन्दिनि पादपङ्कजे
निवेशितात्मा कथमन्यदिच्छति।
स्थितेऽरविन्दे मकरन्दनिर्भरे
मधुव्रतो नेक्षुरसं समीक्षते॥

अत्र यद्यपि उपमेयवाक्ये अनिच्छा, उपमानवाक्ये अवीक्षेति धर्मभेदः प्रतिभाति तथापि वीक्षणाभावस्यावर्जनीयस्य प्रतिषेधानर्हत्वात् इच्छापूर्वकवीक्षाप्रतिषेधोऽयं अनिच्छापर्यवसित एवेति

तवेति, ईश्वरं प्रति भक्तस्योक्तिः—अमृतप्रस्रवणशीले तवपादपङ्कजे निवेशित आत्मा = अन्तःकरणं येन तादृशो भक्तः अन्यदमृतातिरिक्तं फलं कथमिच्छति, न कथमपीत्यर्थः। अमृतं चात्र ब्रह्मानन्दरूपं, हि निश्चितं, मधुव्रतो भ्रमरः, मकरन्देन रसेन, निर्भरे व्याप्तेऽरविन्दे स्थिते सति इक्षुरसं न वीक्षत इत्युपमानवाक्यम्। अवर्जनीयस्येति, अनिष्टेऽपि स्वसामग्रीवशाज्जायमानस्येत्यर्थः। इच्छापूर्व्वकेति, तथाच वीक्षनेरिच्छापूर्व्वकवीक्षणे लक्षणेति भावः। अनिच्छापर्य्यवसित इति, सविशेषणे हीति न्यायादिति भावः। उन्मीलन्ति कदम्बानीति पूर्व्वोदाहृतायामर्थावृत्तावतिव्याप्तिमाशङ्क्याह—अर्थावृत्तिरित्यादि, शब्दावृत्तौ तु धर्म्मस्यैकेनेव शब्देनावृत्त्या बोधना न भिन्नशब्दबोध्यत्वमिति नाति

धर्मकथमनुसन्धेयम्। अर्थावृत्तिदीपकं प्रस्तुतानामप्रस्तुतानां वा, प्रतिवस्तूपमा तु प्रस्तुताप्रस्तुताना-मिति विशेषः। अर्थावृत्तिदीपकं वैधर्म्येण न सम्भवति, प्रतिवस्तूपमा तु वैधर्म्येण दृश्यते॥

ब्याप्तिरतोऽर्थावृत्तिपर्यन्तानुधावनम्। एतच्च भिन्नशब्दबोध्यैकधर्म्मगम्यं प्रस्तुताप्रस्तुतवाक्यार्थसादृश्यं प्रतिवस्तूपमेति लक्षणं बोध्यं। दृष्टान्तालङ्कारेऽतिव्याप्तिवारणाय भिन्नशब्दबोध्येति। तत्र तु बिम्बप्रतिबिम्बभावापन्नधर्म्मगम्यं सादृश्यमिति नातिव्याप्तिः। 'दिवि भाति यथा भानुस्तथा त्वं भ्राजसे भुवि' इत्यादि वाक्यार्थोपमायामतिव्याप्तिवारणाय गम्यमिति। अर्थावृत्तिवारणाय प्रस्तुताप्रस्तुतेति।

'आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतं।
भ्रमद्भ्रमरसङ्कीर्णं स्मरामि सरसीरुहम्'॥

इति स्मरणालङ्कारेऽतिव्याप्तिवारणाय वाक्यार्थेति,। अत्र हि दिवि भातीति वाक्यार्थोपमायां गगनाधिकरणकशोभाश्रयभानुसदृशो भूम्यधिकरणकशोभाश्रय स्त्वमितिप्रतीतिवन्न स्मर्य्यमाणतादृशसरोरुहसदृशं तथाविधमाननमिति प्रतीतिः येन वाक्यार्थगतोपमा गम्या स्यात् किन्तु स्मरणासम्पृक्तातादृशसरोरुहसदृशं तादृशमाननमिति पदार्थगतोपमैवेति तद्वारणमिति दिक्॥ प्रस्तुताप्रस्तुतत्वयोश्चमत्कृतिविशेषाप्रयोजकतया नालङ्कारभेदप्रयोजकत्वमित्यस्वरसादाह— अयञ्चेति,वक्ष्यमाण इत्यर्थः॥

यथा वा –

विद्वानेव हि जानाति विद्वज्जनपरिश्रमम्।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम्॥
यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम्।
न हि कस्तूरिकामोदः शपथेन विभाव्यते॥१७॥

विद्वानेवेति, यदान्ययोगव्यवच्छेदार्थेनैवकारेणाविद्वान्न जानातीति पूर्ववाक्यार्थं स्तस्य च नहि वन्ध्येत्युत्तरवाक्यार्थः सधर्म्मैव तथापि रूपवत्येवाकाश इत्यादि प्रयोगवारणाय भावान्वयस्याप्यावश्यकतया विद्वान् जानातीति वाक्यार्थस्यापि प्रतीते स्तदभिप्रायेण वैधर्म्योदाहरणत्वं बोध्यं॥ ननु वैधर्म्येणोपमेति व्याहतं तस्याः साधर्म्यरूपत्वादिति चेत्? सत्यं वैधर्म्येणोपन्यस्ते न न हि वन्ध्येति वाक्यार्थेनाक्षिप्तस्य अपितु प्रसविन्येव जानातीति वाक्यार्थस्योपमानत्वेन विवक्षणात् मुखतो वैधर्म्यप्रतीतावपि साधर्म्य एव पर्य्यवसानान्न दोषः। वैधर्म्येणेत्यस्य च वैधर्म्यद्वार इत्यर्थः। यदि सन्तीति, एवकारो भिन्नक्रमः, स्वयमेव विकसन्ति प्रकाशन्त इत्यर्थः। अत्रापि गुणाः स्वयं प्रकाशन्त इति भावान्वयविधर्मा कस्तूरिकामोदः शपथेन न ज्ञायत इति वाक्यार्थस्तदाक्षिप्तेन किन्तु स्वयमेव प्रकाशत इति वाक्यार्थेन चौपम्यं गम्यमिति पूर्ववद्वैधर्म्योदाहरणत्वसङ्गतिः।

यत्त्वत्र केश्चिदुक्तं—"विद्वानेवेति पद्यं भवतु नाम कथञ्चिद्वैधर्म्योदाहरणं! यदि सन्तीति तु न युक्तं, वैधर्म्योदाहरणं हि

प्रस्तुतधर्म्मिविशेषोपारूढार्थदार्ढ्याय। स्वाक्षिप्तस्वव्यतिरेकसमान-जातीयस्य धर्म्मान्तरारूढ़स्याप्रकृतार्थस्य कथनं यथा—

'वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः।
न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम्' इत्यादौ॥

अत्र हि सङ्गविशेषेण पूज्यते इति प्रस्तुतार्थाक्षिप्तस्य सङ्गविशेषेण विना न पूज्यत इति स्वव्यतिरेकस्य सजातीयो न हि तुम्बीफलविकल इत्याद्यप्रकृतार्थो निबद्ध इति वैधर्म्यो-दाहरणत्वं। यदि सन्तीत्यत्र तु स्वयं प्रकाशन्ते न परैरित्यस्य प्रस्तुतस्यैव सजातीयोऽप्रकृतोर्थः शपथेन न विभायते किन्तु स्वयमेवेति प्रकृतार्थानुरूपतयैव पर्य्यवसानादिति"

तत्रेदं वक्तव्यं—वंशभव इत्यादि भवदुदाहृतपद्येऽपि कथं वैधर्म्योदाहरणत्वं? नहीत्यादेस्तुम्बीफलविकलो महिमानं न प्रयात्यपितु तद्युक्त इति प्रकृतार्थानुरूपतयैव पर्य्यवसानादिति। किं बहुना—सर्व्वत्रैव वैधर्म्योदाहरणे साधर्म्य पर्य्यवसानं विना नोपमानिर्वाह इति तदुच्छेदप्रसङ्गः। अथापातप्रतिपन्नेना प्रकृतवाक्यार्थेन वैधर्म्यात्तदुदाहरणत्वं? तर्हि प्रकृतेऽपि तद-स्तीति तुल्यं। यदपि प्रस्तुतेत्यादिवैधर्म्योदाहरणत्वनिर्व्वचनं तदयुक्तं, "भटाः परेषां विशरारुतामगुर्दधत्यवातेस्थिरतां हि पांसव" इति वैधर्म्य दृष्टान्ताव्यापनात्; न ह्यत्र प्रस्तुतवाक्यार्थः स्वव्यतिरेकमाक्षिपति किन्त्वप्रकृतवाक्यार्थ एवेति दिक्॥

इत्यलङ्कारचन्द्रिकायां प्रतिवस्तूपमालङ्कारप्रकरणम् ॥१७॥

इति प्रतिवस्तूपमा नाम सप्तदशालङ्कारः॥

चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः।
त्वमेव कीर्तिमान् राजन्! विधुरेव हि कान्तिमान॥

यत्रोपमानोपमेयवाक्ययोर्भिन्नावेव धर्मौ बिम्बप्रतिबिम्बभावेन निर्दिष्टौ तत्र दृष्टान्तः। त्वमेव कीर्तिमानित्यत्र कीर्तिकान्त्योर्बिम्बप्रतिबिम्बभावः।

यथा वा—

कामं नृपाः सन्ति सहस्रशोऽन्ये
राजन्वतीमाहुरनेन भूमिं।
नक्षत्रताराग्रहसङ्कुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः॥

दृष्टान्तालङ्कारं लक्षयति—चेदिति, वाक्ययोरित्यनुवर्त्तते, धर्म्मयोरित्यध्याहार्यं। तदिति,तदेत्यर्थकम्। अर्थतो व्याचष्टे—यत्रेति यत्र=काव्ये, तथा चोपमानोपमेयवाक्यार्थघटकधर्म्मयोर्बिम्बप्रतिबिम्बभावो दृष्टान्त इति लक्षणं॥ काममिति, अनेन प्रकृतराजविशेषेण राजन्वतीं=शोभनराजवतीं "राजन्वान् सौराज्ये" इति निपातः। नक्षत्राण्यश्विन्यादीनि सप्तविंशतिः। तारास्तदितराः, गोबलीवर्दन्यायात्। ग्रहा भौमादयः। सङ्कुला व्याप्ता। ज्योतिष्मतीति प्राशस्त्ये मतुम, अत्र राजन्वती ज्योतिष्मतीत्यनयोर्बिम्बप्रतिबिम्बभावः। पूर्व्वोदाहरणे कीर्त्तिकान्त्योर्बिम्बप्रतिबिम्बभावप्रयोजकं मनोहारित्वरूपं सादृश्यमार्थम् इह तु राजज्योतिषोः प्राशस्त्यरूपं तच्छाब्दमिति भेदः।

यथा वा—

देवीं वाचमुपासते हि बहवः सारन्तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥

नन्वत्रोपमानोपमेयवाक्ययोर्ज्ञानमेक एव धर्म इति प्रतिवस्तूपमायुक्ता ? मैवं अचेतने मन्थाचले ज्ञानस्य बाधितत्वेन तत्र जानातीत्यनेन सागराधस्तलावधि-

देवीमिति, देवीं वाचं=सरस्वतीं, बहव उपासते। हि=सेवन्त एव हि, हिशब्दस्यैवकारार्थत्वात्। तु=परं, सरस्वतीसम्बन्धि-सारम्। असौ=प्रसिद्धः। गुरुकुले क्लिष्टः=अध्ययनश्रमवान्। मुरारिनामा कवि र्नितरा मतिशयेन जानीते। अत्र दृष्टान्तमाह—वानररूपैर्भटैर्योद्धृभिरब्धिर्लङ्घित एव किन्तु अस्याब्धेर्गम्भीरतां आपाताालपर्य्यन्तनिमग्ना पीवरा स्थूला तनुर्यस्यैवं विधोमन्थाचलः मन्दराद्रिरेव जानातीति दृष्टान्तोदाहरणत्वासङ्गतिमाशङ्कते—नन्विति, वाक्ययोरिति सप्तमी एकधर्म्म इत्यनन्तरं शब्दभेदेन निर्दिष्ट इति शेषः। सागरस्याधस्तनो योऽवधिरिति गम्भीरता-पदार्थकथनं संस्पर्शस्तु लक्षणया जानात्यर्थ इति बोध्यम्। तथाच धर्म्मभेदान्न प्रतिवस्तूपमा किन्तु सारस्वतसारज्ञानसागराधस्तलावधिसंस्पर्शयोर्बिम्बप्रतिबिम्बभावाद्दृष्टान्तालङ्कार एवेत्याशयः। वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्व्वरीतिवत्पदावृत्तिदीपकं स्यादित्याशङ्का समाधत्ते—अत्रेति पूर्व्ववत् अर्था-

संसर्गमात्रस्य विवक्षितत्वात्। अत्रोदाहरणे पदावृत्ति-दीपकाद्विशेषः—पूर्ववत् प्रस्तुताप्रस्तुतविषयत्वकृतो द्रष्टव्यः। वैधर्म्येणाप्ययं दृश्यते—

कृतञ्च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम्॥१८॥

वृत्तिप्रतिवस्तूपमयोरिव प्रस्तुताप्रस्तुतेति दृष्टान्तः प्रस्तुताप्रस्तुतविषयः पदावृत्तिस्तु तदन्यतरमात्रविषये त्यर्थः। यद्यप्यत्रात्मनेपद-परस्मैपदभेदेन पदभेदान्न पदावृत्तिशङ्कोचिता तथापि पाठपरिवर्तनेन पदाभेदेऽपि न पदावृत्तेरयं विषय इति बोधयितुमेतदुक्तम्। अयं दृष्टान्तः—कृतञ्चेति, नृपं प्रति मन्त्रिण उक्तिः,—हे राजन्! त्वया मनोगर्वस्याभिमुखं न तु गर्व्वितं कृतञ्च किमन्यदपेक्षितमिति शेषः। एवं शस्त्रप्रयोगादिकं विना नोऽस्माकं द्विषः शत्रवो निहिताश्च न तु निहनिष्यन्ति। अंशुमान् सूर्य्यो यावदुदयाद्रेर्मौलितां शिरोलङ्कारतां नायाति तावदेव तमांसि तिष्ठन्ति तस्मिंस्तु तथाभूतेन तिष्ठन्तीति दृष्टान्तः। अत्र मनोगर्व्वाभिमुखीकरणवैरिहननयोरंशुमदुदयाचलमस्तकानागमन-तमःस्थित्योश्च यथाक्रमं वैधर्म्येण बिम्बप्रतिबिम्बभावः॥

इत्यलङ्कारचन्द्रिकायां दृष्टान्तालङ्कारप्रकरणम्॥१८॥

॥ इति दृष्टान्तोनाम अष्टादशालङ्कारः॥

वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना।
यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता॥

अत्र दातृपुरुषसौम्यत्वस्योपमेयवाक्यार्थस्य पूर्णेन्दोरकलङ्कस्योपमानवाक्यार्थस्य यत्तद्भ्यामैक्यारोपः।

यथा वा—

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूखरे वर्षितं।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतो
धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः॥

निदर्शनां लक्षयति,—वाक्यार्थयोरिति, सदृशवाक्यार्थसम्बन्धी य ऐक्यारोपः= उपमेयवाक्यार्थे उपमानवाक्यार्थाभेदारोप इति यावत्। यद्दातुरिति, दातुः सौम्यतेति यत्, इति सामान्ये न पुंसकं सेयमिति विधेयाभिप्रायकं स्त्रीलिङ्गं। यत्तद्भ्यामिति, यद्यपि मुखं चन्द्र इतिवत् दातुः सौम्यता पूर्णेन्दोरकलङ्कतेत्येतावताप्यैक्यारोपः सम्भवति तथापि यत्तद्भ्यां शीघ्रं स्फुटतया तदवगमात्तदुपन्यासः।

अरण्येति, अबुधो मुर्खो जनः सेवितो यदितिगुणीभूतसेवनक्रियापरामर्शः। उत्तरवाक्यगतेन यच्छब्देन तच्छब्दाक्षेपात् तत् अरण्यरुदितं कृतमित्याद्यन्वयः। यदुद्वर्तनं=यवगोधूमादिचूर्णेन मलापकर्षणं; स्थले निर्जलप्रदेशे; अब्जं जलजम्; ऊखरे अङ्कुरायोग्यक्षारभूमागे; शुनः पुच्छं=श्वपुच्छम्;अवनामितम् ऋजुतासम्पादनाय नम्रीकृतं; बधिरस्य कर्णे—जप एव=जापः, प्रलाप इत्यर्थः; अन्धस्य मुखे तत्सन्मुखं दर्पणो धृत इत्येवं निरर्थकत्वेन

अत्राबुधजनसेवाया अरण्यरोदनादीनां यत्त-ङ्गामैक्यारोपः।

पदार्थवृत्तिमप्येके वदन्त्यन्यान्निदर्शनाम्।
त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः॥

अत्र नेत्रयुगले नीलाम्बुजगतलीलापदार्थारोपो निदर्शना।

यथा वा—
वियोगे गौड़नारीणां यो गण्डतलपाण्डिमा।
अदृश्यत स खर्ज्जूरीमञ्जरीगर्भरेणुषु॥

पूर्वस्मिन्नुदाहरणे उपमेये उपमानधर्मारोपः, इह तूपमाने उपमेयधर्मारोप इति भेदः। उभयत्रा-सदृशानामनेकेषां वाक्यार्थानामबुधजनसेवनरूपप्रकृतवाक्यार्थे ऐक्यारोपः पूर्व्वत्र त्वेकस्यैवैक्यारोप इति विशेषः।

निदर्शनान्तरमाह—पदार्थेति, पदार्थवृत्तिं पदार्थसम्बन्धिनीम्; एके आलङ्कारिकाः, अन्यां पूर्व्वोक्तविलक्षणां। त्वन्नेत्रेति, लीलां शोभां; नीलाम्बुजन्मनोः नीलोत्पलयोः। वियोग इति, गौड़देशगतानां नारीणां वियोगे=स्वकान्तवियोगकाले, यो गण्ड-तले पाण्डिमा=पाण्डुवर्णो भवति, सः खर्जूरीणां लतानां मञ्जरीगर्भस्थेषु रेणुषु अदृश्यत दृष्ट इत्यन्वयः। उपमाने यथोक्तरेणुरूपे, उपमेये उपमानधर्म्मारोप एव पदार्थनिदर्श-नायाः प्राचीनैरुदाहरणात् कथमियं पदार्थनिदर्शनोच्यते? इति शङ्कायामाह—उभयत्रेति, उपमेये उपमानधर्म्मारोपे, उपमाने उपमेयधर्म्मारोपे चेत्यर्थः। तथाचौपम्यपर्य्यवसायित्वस्यैव पदार्थ-

प्यन्यधर्मस्यान्यत्वासम्भवेन तत्सदृशधर्माक्षेपादौपम्ये पर्य्यवसानं तुल्यम्। इयं पदार्थवृत्तिनिदर्शना ललितोपमेति जयदेवेन व्याहृता।

यद्यपि वियोगे गौड़नारीणामिति श्लोकः प्राचीनैर्वाक्यार्थवृत्तिनिदर्शनायामुदाहृतः तथापि विशिष्टयोर्धर्मयोरैक्यारोपो वाक्यार्थवृत्तिनिदर्शना उपमानोपमेययोरन्यतरस्मिन्नन्यतरधर्मारोपः पदार्थवृत्तिनिदर्शनेति व्यवस्थामाश्रित्यास्माभिरिहोदाहृतः।

निदर्शनाजीवत्वेनारोपविषयस्योपमेयत्वेन निवेशे प्रयोजनाभावादिहापि सा युक्तैवेति भावः॥

नन्वेवं सति वाक्यार्थनिदर्शनालक्षणस्यातिव्याप्तिरित्याशङ्काशयवानाह—यद्यपीति, वियोगकालीनगौड़नारीगण्डतलपाण्डिम्नः खर्जूरीमञ्जरीगर्भरेणुदृष्टपाण्डिम्नश्च यत्तत्राभ्यामैक्यारोपसत्वादितिभावः। अर्थविशेषविवक्षयातिव्याप्तिं परिहरन्नेव स्वाभिमतनिदर्शनाद्वयविषयविभागं दर्शयति—तथापीति, विशिष्टयोः बिम्बप्रतिबिम्बभावापन्नधर्म्मविशिष्टयोः ; एवञ्च वाक्यार्थशब्देनैतादृशार्थविवक्षणाद्वियोग इत्याद्युदाहरणे नातिव्याप्तिरिति भावः। उपमानेत्यादि, एतच्च स्वरूपकथनं नत्वेवं रूपेण लक्षणे निवेशः तादूप्यरूपकातिव्याप्तिवारणायोपमाकल्पकत्वस्यारोपविशेषणस्यावश्यकत्वेन उपमाकल्पकस्तत्तद्धर्मारोप इत्येतावत एव लक्षणस्य निर्दुष्टत्वात् तदुक्तम्—'अभवन्वस्तुसम्बन्ध उपमापरिकल्पकः' इति, तादूप्यरूपकेतु तादूप्यावच्छिन्नाभेद एव विवक्षितो न पुनरुपमेति तद्वारणम्॥

एवञ्च—त्वयि सति शिव दातर्य्यस्मदभ्यर्थितानामितरमनुसरन्तो दर्शयन्तोर्थिमुद्रां।
चरमचरणपातैर्दुर्ग्रहं दोग्धुकामाः
करभमनुसरामः कामधेनौस्थितायाम्॥

दोर्भ्यामब्धिं तितीर्षन्तस्तुष्टुवुस्ते गुणार्णवमित्यादिषु वाक्यभेदाभावेऽपिवाक्यार्थवृत्तिरेवनिदर्शनाविशिष्टयोरैक्यारोपसद्भावात् वाक्यर्थयोः सदृशयोरिति लक्षणावाक्ये वाक्यार्थशब्देन बिम्बप्रतिबिम्बभावापन्नवस्तु वि-

ननु त्वयि सतीत्याद्युदाहरणे क्वापि निदर्शना न स्यात् अन्यधर्मस्यान्यत्रारोपात् एकवाक्यत्वेन वाक्यार्थभेदाभावाच्च पदार्थवाक्यार्थनिदर्शनयोरसम्भवादित्याशङ्काह,—एवञ्चेति, उक्तव्यवस्थाश्रयणे चेत्यर्थः। विशिष्टयोरिति, बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टयोरित्यर्थः। तत्र तावत् पूर्वपद्ये भोः शिव! अस्मदभ्यर्थितानां दातरि त्वयि सति इतरं क्षुद्रं प्रभुं अनुसरन्तोर्थिनां मुद्रां चिह्नं दर्शयन्तो वयं कामधेनौ स्थितायां दोग्धुकामाश्चरमयोः पाश्चात्ययोश्चरणयोः पातैर्दुर्ग्रहं दुःखेन ग्राह्यं करभमुष्ट्रशिशुमनुसराम इत्यर्थके सकलकामदमहेश्वरकालीनक्षुद्रधनिकानुसरणकर्तुः कामधेनुस्थितिकालीनतथाविधकरभानुसरणकर्तुश्चैक्यारोपः तत्रोपमानकोटिविशेषणयोः कामधेनुकरभयोरुपमेयकोटिविशेषणयोश्च महेश्वरक्षुद्रधनिकयोर्यथाक्रमं बिम्बप्रतिबिम्बभावो बोध्यः। एवमनुसरणयोरपि। एवन्दोर्भ्यामित्यत्रापि अब्धिगुणसमूहयोर्बिम्बप्रतिबिम्बभावो बोध्यः। नन्वियं व्यवस्था मूलविरुद्धेत्याशङ्काह—वाक्यार्थयोरिति,

शिष्टस्वरूपयोः प्रस्तुताप्रस्तुतधर्मयोर्विवक्षितत्वादिति

एवञ्च—राजसेवामनुष्याणामसिधारावलेहनं ।
पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥

इत्यत्र प्रस्तुताप्रस्तुतवृत्तान्तयोरेकैकपदोपात्तत्वेऽपि वाक्यार्थवृत्तिनिदर्शनाया न क्षतिः तयोर्बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टव्यवहाररूपत्वात् ।

अतएव निदर्शनाया रूपकाद्भेदः रूपके ह्यविशिष्टयोरेव मुखचन्द्रादिकयोरैक्यारोपः ।

ननु पाश्चात्यशब्दस्यावान्तरवाक्यार्थसाधारणानेकपदार्थपरत्वे नैवोक्तोदाहरणसंग्रहसम्भवादेवं विधगुरुतरार्थपरत्वं न युक्तमित्यत आह—एवञ्चेति, एवंविधार्थविवक्षणे चेत्यर्थः । अवलेहनं जिह्वयावघट्टनं,पञ्चाननः सिंहस्तस्य परिष्वङ्ग आलिङ्गनं, व्याली भुजङ्गी,अशक्यत्वं बलवदनिष्टजनकत्वञ्च साधारणो धर्मः प्रस्तुतवृत्तान्तो राजसेवानिदर्शनायाः तल्लक्षणस्य न क्षतिः—नाव्याप्तिः, तयोः प्रस्तुताप्रस्तुतवृत्तान्तयोः असिधारादिभिः समं राज्ञो बिम्बप्रतिबिम्बभावात्तद्विशिष्टयोश्चैक्यारोपादिति भावः ।

एवन्तर्हि सदृशयोरैक्यारोप इत्येव लक्षणमस्त्वित्याशङ्क्याह—अतएवेति, एतादृशविशेषणविवक्षणादेवेत्यर्थः । भेदो व्यावृत्तिः तथाच तदभावे रूपकेति प्रसङ्गः स्यादिति भावः । कथमनेन तद्वारणं? तत्राह—रूपके हीति अविशिष्टयोः बिम्बप्रतिबिम्बभावापन्नवस्त्वविशिष्टयोः बिम्बप्रतिबिम्बभावापन्नेत्यस्य व्यावृत्तिं दर्शयति—अङ्घ्रिदण्ड इत्यादि, बलेर्दैत्यविशेषस्य निग्रहे बन्धने कर्त्तव्ये उर्ध्वमुत्क्षिप्तो हरेरङ्घ्रिदण्डो वो युष्माकं मुदे

अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे।
विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु नः॥

इति विशिष्टरूपकोदाहरणेऽपि न बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टरूपता विधिविष्टरकमलश्लिष्टस्वरूपसाधारणधर्मवत्तासम्पादनार्थमेव तद्विशेषणोपादानात्।

यद्वाहुः सौम्यतेत्यादि निदर्शनोदाहरणेषु दातृपूर्णेन्द्वादीनामानन्दकरत्वादिनैवात्र विशेषणयोर्बिम्बप्रतिबिम्बभावाभावात् यत्र तु विषयविषयिविशेषणानां परस्परसादृश्येन बिम्बप्रतिबिम्बभावोऽस्ति।

ज्योत्स्ना भस्मच्छुरणधवलाबिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिकारात्रिकापालिकीयम्।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्रां कपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन॥

अस्त्विति सम्बन्धः। कीदृशः? विधेर्ब्रह्मणो विष्टर आसनं तद्रूपस्य पद्मस्य नालदण्ड इत्यर्थः। विशिष्टरूपकेति, ऊर्ध्वोत्क्षिप्तत्वविशिष्टाङ्घ्रिदण्डविधिविष्टरपद्मसम्बन्धित्वविशिष्टनालदण्डसम्बन्धिरूपकेत्यर्थः। विशेषणेति, ऊर्ध्वोत्क्षिप्तत्वरूपोपमेयविशेषणविधिविष्टरपद्मसम्बन्धित्वरूपोपमानविशेषणयोरित्यर्थः।

एवकारसूचितबिम्बप्रतिबिम्बभावव्यतिरेकं स्फुटयति—यद्वातुरिति, अभावादिति, सादृश्याभावादिति भावः। रूपकविशेषेऽतिव्याप्तिमाशङ्क्य परिहरति—यत्र त्वित्यादिना, यत्र त्वित्यस्य

इति सावयवरूपकोदाहरणे तत्रापि विषयविषयिणो-स्तद्विशेषणानाञ्च प्रत्येकमैक्यारोपः न तु ज्योत्स्ना-दिविशिष्टरात्रिरूपविषयस्य भस्मादिविशिष्टकापा-लिकीरूपविषयिणश्च विशिष्टरूपेणैक्यारोपोऽस्तीति तस्माद्राजसेवामनुष्याणामित्यादावपि वाक्यार्थवृत्ति

इति सावयवरूपकोदाहरणे इत्यग्रे तनेनान्वयः। विषयविषयिवि-शेषणानाम्—आरोपविषयारोप्यमाणसम्बन्धिनां विशेषणानाम्। ज्योत्स्नेति, इयं रात्रिरेव कापालिकी योगिनी द्वीपाद्द्वीपान्तरं भ्रमतीत्यन्वयः। एतत् प्रधानरूपकम्, एतदङ्गभूतान्यपराणि विशेषणैः प्रतिपाद्यन्ते यथा—ज्योत्स्नारूपेण भस्मनाछुरणमङ्गलेप-स्तेन धवला तारकारूपाण्यस्थीनि बिभ्रती अन्तर्धानस्य व्यसने कौतुके रसिका चन्द्ररूपे मुद्रा कपाले न्यस्तं लाञ्छनस्य छलेन सिद्धाञ्जनस्य परिमलं चूर्णं दधती धारयन्ती दीक्षाकालगृहीतोप-करणेषु मुद्रापदनाम्ना पाखण्डानां व्यवहार इति चण्डीदासः। मुद्रापरिमलशब्दौ प्रशंसार्थावित्यन्ये, मुद्राचिह्नं तद्रूपे कपाल इति वार्थः। विषयविषयिणोः रात्रिकापालिकयोः तद्विशेषणानां तत्सम्बन्धिनां ज्योत्स्नाभस्मादीनां यथाश्रुते रात्रिकापालिकीति समासस्योत्तरपदार्थप्रधानतया ज्योत्स्नादीनां रात्रिविशेषणत्वा-भावादसङ्गतेः। प्रत्येकमिवेति, शुद्धस्वरूपेणैवेत्यर्थः। नन्विति, उक्तयुक्त्या विशेषणत्वाभावादिति भावः। वस्तुतो भस्मादेः कापा-लिकीं प्रत्यपि न विशेषणत्वमपि तु तत्कोटिनिविष्टत्वमेवेत्यपि बोध्यम्; वाक्यार्थशब्दस्य बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टार्थ-परत्वमङ्गीकृत्य राजसेवेत्युदाहरणे वाक्यार्थवृत्तिनिदर्शनाल-

निदर्शनैव युक्ता ; मतान्तरे त्विह पदार्थवृत्त्यैव निदर्शनया भाव्यमिति ॥

अपरां बोधनं प्राहुः क्रिययाऽसत्सदर्थयोः ।
नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः ॥

युक्तमुपसंहरति—तस्मादिति,उक्तलक्षणस्य व्यवस्थितत्वादित्यर्थः। मतान्तरे त्विति, सदृशयोर्वाक्यार्थयोरैक्यारोप इति, यथाश्रुतलक्षणाङ्गीकर्तृमते इत्यर्थः। इह राजसेवेत्युदाहरणे ; पदार्थवृत्त्यैवेति, उपमाकल्पएकपदार्थे अपरपदार्थतद्धर्मान्यतरारोप इति तल्लक्षणस्य तदभिमतत्वादिति भावः ॥

निदर्शनान्तरमाह—अपरामिति, पूर्वविलक्षणामित्यर्थः। निदर्शनामित्यनुषज्यते। क्रिययाऽसत्सदर्थयोर्बोधनमपरान्निदर्शनां प्राहुरिति सम्बन्धः। सदसदर्थयोरिति वक्तव्येऽपि छन्दोऽनुरोधादित्यमभिधानं 'समुद्राभ्राद्घ' इत्यादि सौत्रनिर्देशेन पूर्वनिपातविधेरनित्यत्वज्ञापनात्। लक्षणं चाचष्टे—कस्यचिदिति, अत्रासतः सतो वेति विभागकथनं न तु लक्षणान्तर्गतम् उदासीनार्थबोधने चमत्कारित्वाभावेनैवानतिप्रसङ्गात् ; स्वक्रियया सहकारिभूतया क्रियाविशिष्टस्य वस्तुनः सम्बन्धिनः अर्थस्य बोधनं बोधानुकूलो व्यापारो यन्निबध्यते वर्ण्यते सा निदर्शनेति लक्षणम्।

अथ—निवातपद्मोदरसोदराभ्यां विलोचनाभ्यामवलोकयन्ती।
न केवलं यूनि मनो भवेऽपि व्यनक्ति कं चित्तपसः प्रभावम् ॥

—इत्यादावतिव्याप्तिः,अवलोकनक्रियाविशिष्टया कामिन्या तपःप्रभावबोधनस्य वर्णनादिति चेत्? न, क्रिययेत्यनेन दृष्टान्तविधया

उद्यन्नेव सवता पद्मेष्वर्पयति श्रियम्।
विभावयन् समृद्धीनां फलं सुहृदनुग्रहः॥

कस्यचित्किञ्चित्क्रियाविशिष्टस्य स्वक्रियया परान् प्रत्यसतः सतो वार्थस्य बोधनं यन्निबध्यते तदपरां निदर्शनामाहुः। असदर्थबोधने उत्तरार्द्धमुदाहरणं, तत्र नश्येदिति बोधयदिति वक्तव्ये बोधयदित्यस्य गम्यमानत्वादप्रयोगः ततश्च राज्ञा चन्द्रेण सह विरुध्य स्वयं नाशक्रियया विशिष्टं तमः स्वकीयनाशक्रीयया दृष्टान्तभूतया अन्योऽप्येवं राजविरुद्धश्चेत् नश्येदित्यनिष्टपर्यवसायिनमर्थं बोधयदेव नष्टमिति निबन्धनात् असदर्थनिदर्शना। तथा उत्तरश्लोके सविता स्वोदयसमय एव पद्मेषु लक्ष्मीमादधानः स्वकीयया पद्मलक्ष्म्याधानक्रियया परान् प्रति समृद्धीनां फलं

बोधनस्य विवक्षितत्वात्; उक्तोदाहरणे च लिङ्गविधया बोधकत्वेन तदभावात्; इत्थञ्च दृष्टान्ततया क्रियाविशिष्टस्यार्थबोधकत्वं वर्ण्यमानं निदर्शनेति पर्य्यवसितम्। नश्येदित्यत्र बोधनस्यावर्णनात् कथमुदाहरणत्वमत आह—तत्रेति, उदाहरण इत्यर्थः। लक्ष्ये लक्षणं सङ्गमयति—ततश्चेति, बोधनस्य गम्यमानत्वाच्चेत्यर्थः। दृष्टान्तभूतयेति, दृष्टान्ते भूतया विद्यमानयेत्यर्थः, दृष्टान्तो भूतः सञ्जातो ययेति वा। एवं तमोवत् चन्द्रस्यापि राजत्वं, 'सोमो वै ब्राह्मणानां राजेत्यादिश्रुति

सुहृदनुग्रह एवेति श्रेयस्करमर्थं बोधयन्निबद्ध इति सदर्थनिदर्शना ॥

यथा वा—

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतः पृषद्गणश्चारुमारुतधुतः पतत्यधः ॥

अत्र गिरिशेखरगतो दृष्टिविन्दुगणो मन्दमारुतमात्रेणापि कम्पितः पतन् लघोरुन्नतप्राप्तिः पतनहेतुरित्यसदर्थं बोधयन्निबद्ध इत्यसदर्थनिदर्शना ।

चूडामणिपदे धत्ते यो देवं रविमागतं ।
सतां कार्यातिथेयीति बोधयन् गृहमेधिनः ॥

प्रसिद्धम् अनिष्टपर्यवसायिनमर्थं नाशरूपानिष्टसाधनं राज विरुद्धस्वरूपमर्थम् ॥

उन्नतमिति, यो लघुरल्पबुद्धिरल्पपरिमाणश्च सः उन्नतं पदम् उत्कर्षम् उच्चस्थानञ्चावाप्य हेलयैव पतेदिति ब्रुवन् कथयन् शैलशेखरगतोगिरिमस्तकवर्त्ती पृषद्गणः जलबिन्दुसमूहश्चारुणामन्देनापि मारुतेन धुतः कम्पितः अधः पतति—उत्कर्षात् च्यवते, अधो देशे च पततीत्यर्थः । ध्रुवमिति पाठे बोधमस्य पूर्ववद्गम्यमानत्वादप्रयोगः, 'दृषत्कण' इति पाठे पाषाणकण इत्यर्थः ।

चूडेति, उदयाचल आगतं देवं रविं चूडामणेः पदे स्थाने मस्तके धत्ते धारयति, किं कुर्वन् ? गृहमेधिनः गृहस्थान् सतामातिथेयी कार्येति बोधयन् । आतिथेयी आतिथ्यम् ॥

अत्र समागतं रविं शिरसा सम्भावयन्नुदयाचलः स्वनिष्ठया रविधारणक्रियया समागतानां सतामेवं गृहमेधिभिरातिथ्यं कार्यमिति सदर्थं बोधयन्निबद्ध इति सदर्थनिदर्शना। अत्र केचित् वाक्यार्थवृत्तिपदार्थवृत्ति-निदर्शनाद्वयमसम्भवद्वस्तु-सम्बन्धनिबन्धनमिति ; तृतीया तु सम्भवद्वस्तुसम्बन्धनिबन्धनेति च व्यवहरन्ति।

तथाहि——

आद्यनिदर्शनायां वाक्यार्थयोरक्यमसम्भवत्तयोः साम्ये पर्य्यवस्यति। द्वितीयनिदर्शनायामपि अन्यधर्मोऽन्यत्रासम्भवं धर्मिणोः साम्ये पर्यवस्यति। तृतीयनिदर्शनायान्तु स्वक्रियया परान्प्रति सदसदर्थबोधनं सम्भवदेव समतां गर्भीकरोति। बोधयन् गृहमेधिन इत्यादौ हि कारीषोग्निरध्यापयतीतिवत्समर्थाचरणे णिचः प्रयोगः ; ततश्च यथा कारीषोग्निः शीतापनयनेन वटू-

अत्र—उक्तनिदर्शनात्रयविषये ; केचिदित्यस्येति व्यवहरन्तीत्यनेनान्वयः॥

धर्म्मिणोरिति, धर्म्मयोः साम्यमात्रेण चमत्कारानिष्पत्तेस्तत्कृतबिम्बप्रतिबिम्बभावेन धर्मिणोः साम्यावगतिरितिभावः। गर्भीकरोतीति, स्वविशेषणत्वेन स्वीकरोतीत्यर्थः। दृष्टान्ततया बोधनस्यैव तत्र विवक्षितत्वात्—एतदेवोपपादयति,—बोधयन्नि-

नध्ययनसमर्थान् करोति एवं वर्ण्यमानः पर्व्वतः स्वयमुपमानभावेन गृहमेधिनः उक्तबोधनसमर्थान् कर्तुं क्षमते। यथायं पर्वतसमागतं रविं शिरसा सम्भावयति एवं गृह मेधी समागतं सन्तमुचितपूजया सम्भावये-दिति अतः सम्भति बोधनसम्बन्ध इति ॥ १९ ॥

त्यादिना। करीषं शुष्कगोमयं, तस्यायं—कारीषः, समर्थाचरणे समर्थकरणे सामर्थ्योत्पादनइति यावत्। भावप्राधान्यात् उपमान भावेन दृष्टान्तत्वेन एवं प्रदर्शिते निदर्शनात्रयोनिदर्शनापदप्रवृत्तिनिमित्तस्यैकस्याभावान्नानार्थएव निदर्शनाशब्दइति बोध्यम् ॥

इत्यलङ्कारचन्द्रिकायां निदर्शनाप्रकरणम् ॥ १९ ॥

॥ इति निदर्शनानामोनविंशत्यलङ्कारः ॥

—:०:—

व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।
शैला इवोन्नताः सन्तः किन्तु प्रकृतिकोमलाः ॥
अयमुपमेयाधिक्यपर्यवसायी व्यतिरेकः ।

यथा वा—

पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर !
भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ॥

तन्न्यूनत्वपर्यवसायी यथा—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक! केवलमहं धात्रा सशोकः कृतः ॥

व्यतिरेकं लक्षयति,—व्यतिरेक इति, विशेषो वैलक्षण्यं उपमेयस्याधिक्यं उत्कर्षः। पल्लवत इति पञ्चम्यर्थे तसिल्, कल्पतरोः पल्लवतः पल्लवादेष वक्ष्यमाणस्ते तव करस्य विशेष इति सम्बन्धः;। एकः पल्लवः परो हस्तः कर्णं राधेयं तिरस्कुरुते दानातिशयेनेति भावः। अत्रोपमेयस्य करस्योत्कर्षः, पूर्वोदाहरणे उन्नतत्वेनौपम्यं शाब्दं इह तु रक्तवत्कोमलत्वादिप्रयुक्तं तद्गम्यमिति भेदः। तन्न्यूनत्वेति, उपमेयन्यूनत्वेत्यर्थः। रक्तस्त्वमिति, अशोकवृक्षं प्रति विरहिणः कस्यचिदुक्तिः—हे अशोक! आवयोः सर्वं तुल्यं समानं अहं केवलं धात्रा विधात्रा सशोकः शोकसहितः कृतः; त्वं तु शोकरहित इत्यशोकपदश्लेषादवगम्यते किं तत् सर्वं समानं? तत्राह रक्त इत्यादि, त्वं नूतनैः पल्लवैः रक्तः रक्तवर्णः अहमपि प्रियायाः श्लाघनीयैः गुणैः सौन्दर्यादिभिः रक्तोऽनुरक्तः, अर्थात् प्रियायां हि

अनुभयपर्य्यवसायी। यथा—

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः॥ २०॥

सखे! त्वां प्रति शिलीमुखा भ्रमरा आयान्ति, मां प्रत्यपि स्मरेण धनुषा मुक्ताः प्रेरिताः शिलीमुखाः बाणा आयान्ति, एवं कान्तायाः पादतलस्याघातो यथा तव मुदे सन्तोषाय तद्वत्तथा ममापि सन्तोषायेत्यर्थः। कामिनीपादघातेनाशोकस्य पुष्पोद्गम इति कविप्रसिद्धिः। अत्रोपमेयस्य सशोकत्वे नापकर्षः। अनुभवपर्य्यवसायी—उपमेयोत्कर्षापकर्षन्यतरपर्य्यवसानरहितः॥

दृढ़तरेति, कृपणस्य कृपाणस्य खड्गस्य च आकारतः दीर्घाद् वर्णात् आकृतेश्च केवलं भेदो वैलक्षण्यं प्रकारान्तरेण तु साम्यमेवेत्यर्थः कथं? तत्राह—दृढ़तरं निबद्धो मुष्टिर्येनेति कृपणपक्षे धनव्ययवैमुखेन मुष्टिमोचनाभावात् खड्गपक्षेतु दृढ़तरं निबद्धः सम्बन्धी मुष्टिर्मुष्टिग्राह्यभागो यस्येत्यर्थः; कोशोभाण्डारगृहं तत्र निषण्ण उपविष्टः कृपणः, कोशोपिधानकेनिषण्णः स्थितइति खड्गपक्षे; सहजमलिनः स्वभावमलिनः मलिनवेषत्वात् कृपणः; खड्गस्तु कृष्णवर्णत्वादिति एवञ्च किञ्चिद्धर्म्मप्रयुक्तसाम्यवत्तयाप्रतीयमानयोः किञ्चिद्धर्म्मप्रयुक्तवैलक्षण्यं व्यतिरेकशरीरं वैलक्षण्यन्तु क्वचिदुपमेयस्योत्कर्षे क्वचिच्च तदपकर्षे पर्य्यवसन्नं क्वचित्तु तदन्यतरपर्य्यवसानविरहेपि स्ववैचित्राविश्रान्तमात्रमिति बोध्यम् एतेन चरमभेदद्वयतदुदाहरणदूषणं कस्यचिदापातरमणीयमिव भासमानं प्रयुक्तं वेदितव्यं अत्यन्तासारतया तु नानुवादमर्हतीत्युपरम्यते।

इत्यलङ्कारचन्द्रिकायां व्यतिरेकप्रकरणम्॥ २०॥

सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः
दिगन्तमगमत्तस्य कीर्त्तिः प्रत्यर्थिभिः सह ॥

यथा वा—

छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं।
मूलं याति सरोजलस्य जड़ता ग्लानेव मीनैः सह ॥
आचामत्यहिमांशुदीधितिरपस्तप्तेव लोकैः समम्।
निद्रागर्भगृहं सहप्रविशति क्लान्तेव कान्ताजनैः ॥

सहोक्तिरिति लक्ष्यनिर्देशः, सहभावइत्यादि लक्षणं; सहभावः साहित्यं जनरञ्जनः सहृदयजनाह्लादकः एवञ्चमत्कृतिजनकं साहित्यं सहोक्तिरिति लक्षणं। दिगन्तमिति, तस्य राज्ञः कीर्तिः प्रत्यर्थिभिः शत्रुभिः सह दिगन्तमगमदित्यन्वयः। अत्र च तृतीयाया निरूपितत्वार्थकतया प्रत्यर्थिनिरूपितसाहित्यवती कीर्तिगमनाश्रयइति बोधे एकधर्म्मान्वयित्वरूपसाहित्यबलात्प्रत्यर्थिनामपि गमनान्वयप्रतीतिः। तदुक्तं— "सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्" इति।

छायेति। ग्रीष्मर्तौ मध्याह्नवर्णनमिदं। छाया पान्थैरध्वगैः समं सार्धं विटपिनां तरूणां तलं मूलप्रदेशं संश्रयते, कुत? इत्याकाङ्क्षायामुत्प्रेक्षते श्रान्तेवेति, श्रमश्चात्रातपातिशयजतोबोध्यः; एव मग्रेपि, जड़ता शीतलता ग्लानेव सरोजलस्य मूल मधोदेशं

जनरञ्जनइत्युक्तेरनेन सार्द्धं विरहाम्बुराशेरित्यादौ-न सहोक्तिरलङ्कारः ॥ २१ ॥

मीनैर्मत्स्यैः सह याति गच्छति ग्लानिं बलापचयः तथा अहिमा उष्णा अंशवः करा यस्यैवम्भूतस्य रवेर्दीधीतिस्तप्तेव सन्तप्तेव सती लोकैः समं अपः जलानि आचामति पिबति, दीधितिः स्त्रियामित्यमरः। निद्रा क्लान्तेव सती कान्ताजनैः सह गर्भगृहं अभ्यन्तरगृहं प्रविशति तत्रैव तदुद्भवात् क्लान्तिस्तेजोहानिः सौकुमार्यातिशयेन तत्सौलभ्यात् कान्तोपादानं। इत्यादाविति, इन्दुःस्वयंवरे रघुवंशे अनेन सार्द्धं विरहाम्बुराशेस्तीरेषु तालीवनमर्मरेषु द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवामरुद्भिरिति पद्यं अत्र सहोक्तिरचमत्कारित्वान्नालङ्काररूपेत्यर्थः।

इत्यलङ्कारचन्द्रिकायां सहोक्तिप्रकरणं ॥ २१ ॥

—:-:—

इति सहोक्तिर्नाम एकविंशत्यलङ्कारः ॥

विनोक्तिश्चेद्विना किञ्चित्प्रस्तुतं हीनमुच्यते।
विद्या हृद्यापि सावद्या विना विनयसम्पदम्॥

यथा वा—

यस्य रामं न पश्येत्तु यं च रामो न पश्यति।
निन्दितः स भवेल्लोके स्वात्माप्येनं विगर्हते॥

अत्र च रामदर्शनेन विना हीनत्वं विनाशब्द-मन्तरेणैव दर्शितम्

तच्चेत्किञ्चिद्विना रम्यं विनोक्तिः सापि कथ्यते।
विना खलैर्विभात्येषा राजेन्द्र! भवतः सभा॥

विनोक्तिरिति, किञ्चिद्विना प्रस्तुतं वर्ण्यं हीनं दुष्टमुच्यते चेत्तदाविनोक्तिर्नामालङ्कारइत्यर्थः। विद्येति, विनयसम्पत्तिं विना या विद्या सा हृद्या मनोहरापि दुष्टेत्यन्वयः। अत्र प्रस्तुताया विद्याया विनयं विना दुष्टत्वमुक्तम्। यस्येति, यः पुरुषः स्वात्मा स्वान्तःकरणं विगर्हते निन्दति। रामदर्शनं विनेति, रामकर्म्मकं रामकर्तृकंच दर्शनं विनेत्यर्थः; तथाच विनोक्तिरित्यर्थग्रहणं नतु शब्दग्रहणमिति भावः॥

प्रकारान्तरमाह,—तच्चेदिति, तत्प्रस्तुतं किञ्चिद्विना रम्यञ्चेत्सापि विनोक्तिः कथ्यतइत्यन्वयः; इत्यञ्च किञ्चिद्व्यतिरेकेण प्रस्तुतस्य रम्यत्वारम्यत्वान्यतरवर्णनं विनोक्तिरिति प्रकारद्वयसाधारणं सामान्यलक्षणं बोध्यं। यत्तु हृद्योर्विनार्थसम्बन्ध एव विनोक्तिः, हृद्यत्वञ्च विना कृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां भवती-त्यर्वाचीनैरुक्तं तदयुक्तं, कारणं विना कार्य्योत्पत्तिकथनरूपे

यथा वा—

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि—
र्नैशस्यार्चिर्हुतभुज इव छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधः पतनकलुषा गृह्णतीव प्रसादम् ॥

अत्र तमःप्रभृतीन् विना निशादीनां रम्यत्वं विना शब्दमन्तरेण दर्शितम् ॥

विभावनालङ्कारेऽतिव्याप्तेर्वारणाय विनार्थसम्बन्धप्रयुक्तप्रस्तुतगत-रमणीयत्वादेरपि लक्षणे निवेशस्यावश्यकत्वादिति ॥

आविर्भूतइति, मानवतीविषये नायकपरामर्शोऽयम् । इयं वरतनुरन्तः अन्तःकरणे मोहेन मानावेशेन मुक्तकल्पा ईषन्न्यून-मुक्ता, लक्ष्यते केवलपूर्व्वं रोधसस्तटस्य पतनेन कलुषा अनन्तरं कालुष्यापगमात् प्रसादं नैर्मल्यं गृह्णती आश्रयन्ती गङ्गेव; तथा शशिनि चन्द्रे आविर्भूते उदिते सति तमसा मुच्यमाना रात्रिरिव एवं छिन्नोनष्टः भूयिष्ठो धूमो यस्याः एवम्भूतानि शिवस्य हुतभुजः वह्नेरर्चिः शिखेवेति । दर्शितमिति, अर्थतोबोधितमित्यर्थः ॥

इत्यलङ्कारचन्द्रिकायां विनोक्तिप्रकरणम् ॥ २२

—:·:—

॥ इति विनोक्तिनाम द्वाविंशत्यलङ्कारः ॥

समासोक्तिः परिस्फूर्त्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः॥

यत्र प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाम्यबला दप्रस्तुतवृत्तान्तस्यापि परिस्फूर्त्तिस्तत्र समासोक्ति रलङ्कारः॥

समासेन संक्षेपेण प्रस्तुताप्रस्तुतवृत्तान्तयोर्वच-

समासोक्तिं लक्षयति—समासोक्तिरिति, प्रस्तुते वर्ण्यमाने अप्रस्तुतस्य अप्रस्तुतवृत्तान्तस्य परिस्फुर्त्तिश्चेत्तदा समासोक्तिरित्यन्वयः॥ अयमिति, इन्द्रस्येयमैन्द्री प्राचीमुखमादिभागः वदनञ्च रक्तो रक्तवर्णः अनुरक्तश्च चुम्बनं सम्बन्धः वक्त्रसंयोगविशेषश्च यथाश्रुतलक्षणस्य वक्ष्यमाणे—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः।
राजा हरति सर्वस्य हृदयं मृदुलैः करैः॥

इत्यादिप्रकृताप्रकृतश्लेषेऽतिव्याप्तिराह—विशेषणसाम्यबलादिति, विशेषणमात्रसाम्यबलादित्यर्थः एवञ्च विशेषणमात्रसाम्यगम्याप्रस्तुतवृत्तान्तत्वं लक्षणं बोध्यम्। उदाहृतश्लेषे चाप्रकृतनृपवृत्तान्तस्य विशेष्यवाचिना श्लिष्टेन राजपदेनाप्यवगमान्नातिव्याप्तिः।

संज्ञाप्रवृत्तिनिमित्तमवयवार्थं दर्शयति—समासेनेति, वचनात् प्रतिपादनात्। लक्ष्ये लक्षणं गमयति—अत्रेति, प्रारम्भः आदिभागः साधारण्यात् श्लिष्टत्वात्। यद्यपि चुम्बतीत्यत्र न श्लेषस्तथापर्थद्वयबोधकत्वमात्रेण तस्य साधारण्योक्तिः। उपस्कृतादिति साधारण्यादित्यस्य विशेषणम्; तत्र चन्द्रमःशब्दगतेन

नात् उदाहरणमयमैन्द्रीति अत्र हि चन्द्रस्य प्राची-प्रारम्भलक्षणमुखसम्बन्धलक्षणे उदये वर्णमाने मुखशब्दस्य प्रारम्भवदनसाधारण्यात् रक्तशब्दस्या-रुणकामुकसाधारण्यात् चुम्बतीत्यस्य प्रस्तुतार्थ-सम्बन्धमात्रपरस्य शक्यार्थान्तरसाधारण्याच्च चन्द्रमः शब्दगतपुंल्लिङ्गेन ऐन्द्रीशब्दगतस्त्रीलिङ्गेन तत्-प्रतिपाद्येन्द्रसम्बन्धित्वेन चोपस्कृतादप्रस्तुतपरवनि-तासक्तपुरुषवृत्तान्तः प्रतीयते।

यथा वा—

व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावलि,
प्रेङ्खत्कुण्डलशोभि गण्डयुगलं प्रस्वेदिवक्त्राम्बुजम्।

पुंल्लिङ्गेन नायकत्वाभिव्यक्त्या उपस्कारः। ऐन्द्रीति, स्वरूपपरं तद्गतेन स्त्रीलिङ्गेन तदर्थस्य नायिकात्वाभिव्यक्त्या ऐन्द्रीशब्द-प्रतिपाद्येनैन्द्रसम्बन्धित्वेन च परकीयत्वाभिव्यक्त्येति बोध्यम्। वृत्तान्तः व्यवहारो मुखचुम्बनरूपः॥

व्यावल्गदिति, नायिकानुरक्तस्य कस्यचित्क्रीड़ालम्बनं कन्दुकं प्रत्युक्तिरियं हे कन्दुक! सुभगया सुन्दर्या एतया नायिकया रसात् प्रीतिविशेषात् सादरमादरसहितं यथास्यात्तथा यत् यस्मात् संसेव्यसे तत्तस्मात् कृती धन्योसीत्यन्वयः। कथमित्याकां-क्षायां संसेवनक्रियां विशिनष्टि—व्यावल्गदित्यादिना, व्यावल्गत् विशेषत आ समन्ताच्चलन् कुचभारो यत्र तथा आकुलाः क्रीड़ाविशे-नितस्ततः पर्यस्ताः कचाः केशा यत्र एवं व्यालोला दोलायिता हारावलिर्यत्र तथा प्रेङ्खद्भ्यां चञ्चलाभ्यां कुण्डलाभ्यां शोभायुक्तं गण्ड-

शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया,
यस्मात्कन्दुक ! सादरं सुभगया संसेव्यसे तत्कृती ॥

अत्र कन्दुकवृत्तान्ते वर्ण्यमाने व्यावल्गत्कुच-भारमित्यादिक्रियाविशेषणसाम्यात् विपरीतरता-सक्तनायिकावृत्तान्तः प्रतीयते। पूर्वत्र विशेषणानि श्लिष्टानि इह साधारणानीति भेदः सारूप्यादपि समासोक्तिर्दृश्यते ॥

यथा वा—

पुरा यत्र स्रोतःपुलिनमधुना तत्र सरिताम्
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदम्
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥

युगलं यत्र एवं प्रस्वेदयुक्तं वक्त्राम्बुजं यत्र शश्वन्निरन्तरं दत्तः करेण प्रहारो यत्र तथाऽधिकः श्वासो यत्र तथेति वृत्तान्तः विपरीतरतरूपः। अत्रापि कन्दुकशब्दगतपुल्लिङ्गेन नायकत्वाभि-व्यक्तिर्बोध्या। श्लिष्टानीति,श्लेषमूलकाभेदाध्यवसायविषयाणीत्यर्थः। साधारणानीति, श्लेषं विनैव प्रकृताप्रकृतवृत्तान्तयोरनुगता-नीत्यर्थः; तथा च लक्षणे साम्यशब्देन श्लेषकृतं स्वारसिकं च साम्यं विवक्षितमिति भावः। सारूप्यात् सादृश्यात्। पुरेति, उत्तरचरिते सीतात्यागानन्तरं कदाचिद्वनं प्रति गतस्य भगवतो रामचन्द्रस्येयमुक्तिः—पुरा वनवासकाले सरितां नदीनां स्रोतः प्रवाहो यत्र प्रदेशे आसीत्तत्राधुना पुलिनं अस्तीति शेषः;

अत्र वनवर्णने प्रस्तुते तत्सारूप्यात्कुटुम्बिषु धन-सन्तानादिसम्बद्ध्यसम्बद्धिविपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयते। अत्र च प्रस्तुताप्रस्तुतसाधारणविशेषणबलात् सारूप्यबलाद्वाऽप्रस्तुतवृत्तान्तस्य प्रत्यायनं तत्प्रस्तुते विशेष्ये तत्समारोपार्थं सर्वथैव प्रस्तुतानन्वयिनः कविसंरम्भगोचरत्वायो-

तथा क्षितिरुहां तरूणां घनविरलभावः विपर्यासं वैपरीत्यं यातः प्राप्तः सान्द्राणां विरलता विरलानां शाखापल्लवादिवृद्ध्या सान्द्रताजातेत्यर्थः ; तथा च बहोर्भूयसः कालादनन्तरं दृष्टमिदं वनमपरमन्यदिव मन्ये परन्तु शैलानां पर्वतानां निवेशः विन्यासविशेषः तदेवेदं वनमिति बुद्धिं प्रत्यभिज्ञारूपां दृढयति दृढीकरोतीत्यर्थः। तत्सारूप्यादिति, वनसादृश्यादित्यर्थः ग्रामादौ किं वनसादृश्यमित्याकांक्षायां तद्गर्भविशेषणमाह—कुटुम्बिष्वित्यादि, कुटुम्बिषु कुटुम्बिगतो यो धनसम्बद्धासम्बद्धोर्विपर्यासस्तं प्राप्तस्येत्यर्थः, तत्समासाश्रयस्य तादृशकुटुम्बिसमाश्रयस्य; तथा च समृद्धासमृद्धिविपर्यासवदाश्रयत्वं सादृश्यमिति भावः। किमस्य सादृश्यस्योत्थापकमिति चेत्—घनविरलेति, विपर्यासमिति च, ताभ्यामुक्तसादृश्यगर्भीकरणात् एतेनैषा सादृश्यगर्भविशेषणोपस्थापितसादृश्यमूला समासोक्तिरिति मूलग्रन्थानवबोधस्तद्विरोधश्चेति दूषणमलग्नकं वेदितव्यम्। अथास्याप्रस्तुतवृत्तान्तस्य विशेषणसाम्यगम्यत्वाभावादुक्तलक्षणस्याव्याप्तिरिति चेन्न विशेषणसाम्यगम्यसादृश्यगम्यत्वेपि विशेषणसाम्यगम्यत्वानपायात् प्राधान्यात्तु परं सारूप्यस्य गमकत्वोपदर्शनं सारूप्यादिति

लोचनकृता पर्य्यायोक्तं—'यदनेन प्रकारेणाभिधीयत, —इतीदमेव लक्षणमङ्गीकृत्य तदुदाहरणे च—कार्य्येण शब्दाभिहितेन कारणं व्यङ्ग्यं प्रदर्श्य, तत्र लक्षणं लक्ष्य-नाम च क्लिष्टगत्या योजितं। वाच्यादनेन प्रकारेण व्यङ्ग्येनोपलक्षितं सद् यदभिधीयते तत्पर्य्यायेण प्रकारान्तरेण व्यङ्ग्येनोपलक्षितमुक्तमिति—सर्वोयं क्लेशः किमर्थं—इति न विद्मः। प्रदर्शितानि हि गमस्यैव रूपान्तरेणाभिधाने बहून्युदाहरणानि, 'चक्राभिघात-प्रसभाज्ञयैव'—इति प्राचीनोदाहरणमपि स्वरूपेण गमस्य भगवतो रूपान्तरेणाभिधानसत्वात् सुयोजनमेव।

वासुदेवत्वस्य वा धर्मस्य प्रकारान्तरेणानभिधानात्, तस्मात् पर्य्यायेण कार्य्यादिद्वारेणोक्तं गम्यमाक्षिप्तं वेति लक्षणार्थं इति। अभिधानं आक्षेपो व्यञ्जनं वा ॥

पर्य्यायोक्तमिति, क्वचित्पर्य्यायोक्त—इति पाठस्त्वयुक्तः, व्यङ्ग्येनोपलक्षितमुक्तमितिव्याख्यानग्रन्थविरोधात्। न विद्म इति, यच्छब्दाभिहितस्यापि भगवतो वासुदेवत्वादिना रूपान्तरेण व्यङ्ग्यतया यथाश्रुते बाधकाभावादिति भावः; न चाभिधाविषये कथं व्यञ्जनेति वाच्यं, वासुदेवत्वादिना प्रतीयमाने भगवत्यभिधा-विषयत्वासम्भवात्, तस्याः स्वावच्छेदकधर्मेणैव बोधकत्वात्, अतएवोक्तं 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति' इह तु लक्षणाहेत्वभावाद्व्यञ्जनोपगम्यत इति ॥

यत्तु तत्र राहुशिरश्छेदावगमनं तत्र प्रागुक्त-रीत्या प्रस्तुताङ्कुर एव। प्रस्तुतेन च राहोः शिरोमात्रा-वशेषेणालिङ्गनवन्ध्यात्वाद्यापादानरूपे वाच्ये भग-वतो रूपान्तरे उपपादिते तेन भगवतः स्वरूपेणा-वगमनं पर्य्यायोक्तस्य विषयः॥

ननु प्रस्तुतेन ताद्दशरतोत्सवरूपेण कार्य्येण प्रस्तुतस्यैव राहु-शिरश्छेदरूपकारणस्य प्रतीतौ चमत्कृतिविशेषस्तस्या अलङ्का-रत्वं गमयति, तच्च लोच्यमानमप्रस्तुतप्रशंसाया असम्भवादुक्त-रीत्या पर्य्यायोक्तरूपतयैव स्वीकर्तव्यमित्याशङ्काह—यत्त्विति, अलङ्काराणामियत्तानियमाभावेन प्रस्तुताङ्कुरस्याप्यलङ्कारान्तर-त्वादेवंविधशब्दस्वारस्यभङ्गेन प्राचीनलक्षणव्याख्यानमयुक्तमिति भावः। संक्षेपतोदर्शितमपि पर्य्यायोक्तविषयं विशदयति—प्रस्तु-तेनेत्यादिना; यत्तु भगवद्रूपेणावगमनं विशेषणमर्य्यादालभ्यत्वेना-सुन्दरं पर्य्यायोक्तस्य विषय—इति तदविचारितरमणीयं, न हि पर्य्यायोक्ते व्यङ्ग्यसौन्दर्य्यकृतोविच्छित्तिविशेषः किन्तु भङ्ग्यन्तराभि-धानकृतएव, व्यङ्ग्यन्तु भङ्ग्यन्तराभिधानतो सुन्दरमेव प्रायशो दृश्यते, यथा इहागन्तव्यमिति विवक्षिते व्यङ्ग्ये, अयं देशोऽलङ्करणीयः सफलतामुपनेतव्य—इत्यादौ, अतस्तदसुन्दरत्वोद्भावनमकिञ्चित्-करमेव; अलङ्कारसर्वस्वकारग्रन्थविरोधोद्भावनन्तु तच्छ्रद्धाकारिणं प्रति न शोभते, उपजीव्यत्वोद्भावनमपि ग्रन्थस्याकिञ्चित्करमेव। युक्तिविरोध—इति परीतकर्षासहिष्णुत्वमात्रमुद्भावयितुरवगमय-तीत्यलं विस्तरेण॥

पर्य्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम्
यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥

अत्र नायिकां नायकेन सङ्गमय्य चूतलतादर्शन-व्याजेन निर्गच्छन्त्या सख्या तत्स्वाच्छन्द्यसम्पादन-रूपेष्टसाधनं पर्य्यायोक्तम् ॥

यथा वा—

देहि मत्कन्दुकं राधे परिधाननिगूहितम् ।
इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः ॥

पूर्वत्र परेष्टसाधनमत्र कन्दुकशोधनार्थं नीवी-विस्रंसनव्याजेन स्वेष्टसाधनमिति भेदः ॥ २९ ॥

प्रकारान्तरेण पर्य्यायोक्तं लक्षयति —पर्य्यायोक्तमिति.रमणी-येन व्याजेन मिषेण स्वस्य परस्य वा इष्टस्य यत्साधनं सम्पादनं तदपि पर्य्यायोक्तं, पर्य्यायेण व्याजरूपेणोक्तं यत्रेति व्युत्पत्तेः ।

सम्पादनेति, सम्पादनरूपं यदिष्टं तत्साधनं तत्करण-मित्यर्थः ।

देहीति, परिधानेन अधरवस्त्रेण निगूहितमाच्छादित-मित्यर्थः, एवञ्च प्रकारद्वयसाधारणं तदन्यतरत्वं सामान्य-लक्षणम्बोध्यम् ॥ २९ ॥

इत्यलङ्कारचन्द्रिकायां पर्य्यायोक्तप्रकरणम् ॥

॥ इति पर्य्यायोक्तन्नामोनत्रिंशदलङ्कारः ॥ २९ ॥

—:०:—

उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः।
कः स्वर्धुनि विवेकस्ते पापिनो नयसे दिवम्॥
साधु दूति! पुनः साधु कर्त्तव्यं किमतः परम्।
यन्मदर्थे विलूनासि दन्तैरपि नखैरपि॥

निन्दायास्तुतेः स्तुत्यादिनिन्दाया वा अवगमनं व्याजस्तुतिः। कः स्वर्धुनीत्युदाहरणे विवेको नास्तीति निन्दाव्याजेन गङ्गासुकृतिवदेव महापातकादिकृतवतोऽपि स्वर्गं नयतीति व्याजरूपया निन्दया तत्-प्रभावातिशयस्तुतिः, साधुदूतीत्युदाहरणे मदर्थं महा-क्लेशमनुभूतवत्यसीति व्याजरूपया स्तुत्या मदर्थं न गतासि किन्तु रन्तुमेव गतासि, धिक् त्वां दूतिकाधर्म-विरुद्धकारिणीमिति निन्दावगम्यते।

उक्तिरिति, अत्र निन्दास्तुतिभ्यामिति स्तुतिनिन्दयोरिति चेतरेतरो न विवक्षितः, तथाच निन्दास्तुतेः स्तुत्या च निन्दायाः स्तुत्या स्तुतेश्चोक्तिरभिव्यक्तिः व्याजस्तुतिरित्यर्थः। प्रथमे व्याजेन स्तुतिरिति चरमयोर्व्याजरूपा स्तुतिरिति च व्युत्पत्तेः, अतएव व्याजस्तुतिपदार्थानुगमाभावान्निन्दया निन्दाभिव्यक्तिर्व्याजनिन्दा-ख्यमलङ्कारान्तरं— इत्यग्रे वक्ष्यते; एवमाद्ये प्रकारद्वये स्तुतिनिन्दयोः समानविषयत्वभिन्नविषयत्वाभ्यां प्रत्येकं द्वैविध्यं —इति चत्वारो भेदाः; अन्यस्तु भिन्नविषयस्तुतिक एकएवेति पञ्चभेदाः; लक्षणन्तु—व्याजनिन्दाभिन्नत्वे सति स्तुतिनिन्दान्यतर-पर्य्यवसायि स्तुतिनिन्दान्यतरत्वं सर्व्वानुगतं बोध्यम्॥

यथा वा—

कस्ते शौर्य्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते।
सप्तसप्तिसमारूढा भवन्ति परिपन्थिनः॥
अर्द्धं दानववैरिणा गिरिजयाप्यर्द्धं शिवस्याहृतं।
देवेत्थं जगतीतले स्मरहराभावे समुन्मीलति॥
गङ्गासागरमम्बरं शशिकला नागाधिपः क्ष्मातलं।
सर्वज्ञत्वमधीश्वरत्वमगमत् त्वां माञ्च भिक्षाटनम्॥

अत्राद्योदाहरणे सप्तसप्तिपदगतश्लेषमूलनिन्दाव्याजेन स्तुतिर्व्यज्यते, द्वितीयोदाहरणे सर्वज्ञः सर्वेश्वरोऽसीति राज्ञः स्तुत्या वराजकृपया मदीयवैदुष्यादि-

कस्ते इति, नृपं प्रति कवेरुक्तिः—त्वयि योद्धुमेकं सप्तिं अश्वं आस्थिते आरूढे सति परिपन्थिनः शत्रवः सप्ताश्वसमारूढा भवन्तीत्यन्वयः। सप्तसप्तयोऽश्वा अस्येति सूर्य्यः, सप्त च ते सप्तयः अश्वाः तत्समारूढा—इति द्वितीयोऽर्थो निन्दाद्योतकः, त्वया संमुखा हताः सूर्य्यमण्डलं भित्वा दिवमुपगता—इति स्तुतौ पर्य्यवसानम्॥

अर्द्धमिति, शिवस्य देहार्द्धं दानवानां वैरिणा हरिणा आहृतं हरिहरात्मकस्यैकस्य विग्रहस्य प्रसिद्धेः, एवं गिरिजयाप्यवशिष्टार्धमाहृतं, हे देव! राजन्! इत्थमुक्तप्रकारेण जगतीतले स्मरहरस्याभावे समुन्मीलति प्रकाशमाने सति गङ्गासागरं प्रत्यगमदित्याद्यन्वयः। नागाधिपः शेषः क्ष्मातलं पातालं त्वामिति पूर्व्वान्वितम्॥

वैदुष्यादिति, विद्वत्तादीत्यर्थः। आदिना तपःशीलादिपरिग्रहः। नचात्र राजवर्णनप्रस्तावे कथं स्तुतिर्व्याजरूपत्वं—इति

दारिद्र्यादि सर्वं जानन्नपि वस्त्रप्रदानेन रक्षितुं शक्तोऽपि मह्यं किमपि न ददासीति निन्दा वाच्यते; सर्वमिदं निन्दास्तुत्योरेकविषयत्वे उदाहरणं। भिन्न-विषयत्वे निन्दया स्तुत्याभिव्यक्तिः, यथा—

कस्त्वं वानर ! रामराजभवने लेखार्थसंवाहको-
यातः कुत्र पुरा गतः स हनुमान्निर्दग्धलङ्कापुरः।
बद्धो राक्षससूनुनेति कपिभिः सन्ताड़ितस्तर्जितः
स व्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते॥

अत्र हनुमन्निन्दका इतरवानरस्तुत्यभिव्यक्तिः स्तुत्या निन्दाभिव्यक्तिः, यथा—

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून् मृषा
नैषां गर्ववचः शृणोषि न च तान् प्रत्याशया धावसि।

वाच्यं ? स्तुतिपर्यवसानविवक्षायां स्वकीयभिक्षाटनोद्घाटनस्या-सङ्गतत्वेन स्तुतेरुक्तनिन्दारूपोपालम्भपर्य्यवसानस्यानुभवसिद्ध-स्याविरुद्धत्वात्॥

कस्त्वमिति, अङ्गदं प्रति कस्यचिद्राक्षसस्य प्रश्नः। रामरूपस्य राज्ञो भवने लेखार्थस्य सन्देशस्य वाहकोऽस्मीत्युत्तरम्, पुरा पूर्वमागतः। निर्दग्धलङ्कापुरः स हनुमान् कुत्र यात—इति पुनः पूर्वस्य प्रश्नः। बद्ध—इत्याद्युत्तरार्धमङ्गदस्योत्तरं। राक्षसस्य रावणस्य सूनुना बद्ध—इति—हेतोः कपिभिर्वानरैः सम्यक् ताड़ितस्तर्जितः स वनमृगः हनुमान् व्रीडया लज्जया आत्तः प्राप्तः पराभवो येन तादृशः कुत्र यात—इति न ज्ञायत—इत्यन्वयः॥

यदिति, हे कुरङ्ग ! यद्—यस्माद् धनिनां मुखं मुहुर्मुहुर्वारंवारं नेक्षसे न पश्यसि, मृषा मिथ्या चाटून् प्रियशब्दान्

काले बालतृणानि खादसि परं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग! कुत्र भवता किन्नाम तप्तं तपः॥

अत्र हरिणस्तुत्या राजनिर्विण्णस्यात्मनोनिन्दाभिव्यज्यते, अप्रस्तुतप्रशंसाविषय—इति अलङ्कारसर्वस्वकारः—तेन हि सारूप्यनिबन्धनाप्रस्तुतप्रशंसोदाहरणान्तरं वैधर्म्येणापि दृश्यते,

यथा—

धन्याः खलु वने वाताः काह्लाराः सुखशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥

अत्र वाता धन्या—इति अप्रस्तुतार्थादहमधन्या—इति वैधर्म्येण प्रस्तुतार्थः प्रतीयत—इति व्युत्पादितं। इयमेवाप्रस्तुतप्रशंसा न कार्यकारणनिबन्धनेति दण्डी,

न वदसि—यदिति सर्व्वत्र सम्बध्यते—एषां धनिनां गर्वयुक्तं वचनं न शृणोषि, तान् धनिकान् प्रति आशया धनाशया न धावसि, परं केवलं काले क्षुधासमये खादसि भक्षयसि, निद्राया आगमे च निद्रां प्राप्नोषि, तत्तस्मात्—कुत्र तीर्थे—किं नाम तपः—तप्तं; तद् ब्रूहीत्यन्वयः॥

निर्विण्णस्य—खिन्नस्य। तेनह्येतस्य—इति व्युत्पादितमित्यग्रेतनेनान्वयः॥

कल्हारं जलपुष्पविशेषः, तत्सम्बन्धिनः—काल्हाराः, सुखयन्तीति सुखाः—सुखाश्च ते शीतलाश्चेत्यर्थः॥

यदाह—

अप्रस्तुतप्रशंसा स्यादकाण्डे तु या स्तुतिः ।
सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ॥
अर्थैरयत्नसुलभैर्जलैर्दर्भाङ्कुरादिभिः ।
सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते ॥
राजानुवर्तनक्लेशनिर्विस्सेन मनस्विना—इति ।

वस्तुतस्त्वत्र व्याजस्तुतिरित्येव युक्तं, स्तुत्या निन्दाभिव्यक्तिरित्यप्रस्तुतप्रशंसातोवैचित्र्यविशेषसद्भावात्, अन्यथा प्रसिद्धव्याजस्तुत्युदाहरणेष्वप्यप्रस्तुताभ्यां निन्दास्तुतिभ्यां प्रस्तुते स्तुतिनिन्दे गम्येते—इत्येतावता व्याजस्तुतिमात्रमप्रस्तुतप्रशंसा स्यात्, एवञ्चानया प्रक्रियया यत्रान्यगतस्तुतिविवक्षयान्यस्तुतिः क्रियते तत्रापि व्याजस्तुतिरेव, अन्यस्तुतिव्याजेन तदन्यस्तुतिरित्यर्थानुगमसद्भावात् ।

अप्रकाण्डे—अप्रस्तावे; तथाचाप्रस्तुता चासौ प्रशंसा चेति व्युत्पत्तिरिति भावः । न परसेविनः—अपरसेविनः; प्रशस्यते—स्तूयते ॥

मतद्वयेप्यस्वरसबीजं दर्शयति,—वस्तुतस्त्विति। अभिव्यक्तिरिति, योऽप्रस्तुतप्रशंसातोवैचित्र्यस्य विषय आलम्बनभूतोविशेष—इत्यन्वयः,अन्यथा ततोवैचित्र्येऽपि तदन्तर्भावाङ्गीकारे । एवञ्चेति, अन्यगतस्तुतिनिन्दाभ्यामन्यगतनिन्दास्तुत्यभिव्यक्तौव्याजस्तुतित्वसिद्धौ चेत्यर्थः । प्रक्रियया—प्रकारेण ॥

यथा—

शिखरिणि क्व नु नाम कियच्चिरं
किमभिधानमसावकरोत्तपः ।
तरुणि ! येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः ॥

अत्र शुकशावकस्तुत्या नायिकाधरसौभाग्यातिशयस्तुतिर्व्यज्यते ॥ ३० ॥

शिखरिणीति, नायिकां प्रति नायकस्योक्तिः—हे तरुणि ! असौ शुकबालकः, नाम वितर्के, क्व नु कस्मिन्, शिखरिणि पर्वते, कियत्कालं चिरं, किमभिधानं किंनामकं, तपः अकरोत् येन हेतुना तवाधरवत्पाटलं रक्तवर्णं विम्बफलं दशतीत्यन्वयः ॥ ३० ॥

इत्यलङ्कारचन्द्रिकायां व्याजस्तुतिप्रकरणम् ॥

॥ इति व्याजस्तुतिर्नाम त्रिंशदलङ्कारः ॥ ३० ॥

निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते।
विधे! स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः॥

अत्र हरनिन्दया विषमविपाकं संसारं प्रवर्तयतो-विधेरभिव्यङ्ग्या निन्दा—व्याजनिन्दा।

यथा वा—

विधिरेव विशेषगर्हणीयः करट! त्वं रट कस्तवापराधः।
सहकारतरौ चकार यस्ते सह वासं सरलेन कोकिलेन॥

अन्यस्तुत्यान्यस्तुत्यभिव्यक्तिरिति पञ्चमप्रकार-व्याजस्तुतिप्रतीबन्दीभूतेयं व्याजनिन्दा।

व्याजनिन्दां लक्षयति,—निन्दाया—इति, यत्रान्यनिन्दयाऽन्यस्यनिन्दाया अभिव्यक्तिः पर्य्यवस्यति सा व्याजनिन्दा—इतरनिन्दाव्याजेन निन्देतिव्युत्पत्तेः। विधे—इति, हे विधे! ब्रह्मन्! प्राक् पूर्व्वं ते तवैकमेव शिरो यः अहरत् अच्छिनत् स एवार्थात् हरोनिन्द्य—इत्यन्वयः॥

निन्दयेत्यभिव्यङ्ग्येत्यनेनान्वितं, निन्दयाभिव्यङ्ग्या विधेर्निन्दा व्याजनिन्देत्यन्वयः। विषमविपाकं दारुणपरिणामं॥

विधिरेवेति, विशेषतोगर्हणीयः, हे करट! काक! त्वं रट रटनं कुरु,योऽसौ विधिः आम्रवृक्षे सरलेन सौम्येन कोकिलेन सह वासं तव चकारेत्यन्वयः॥

ननु केनाप्यालङ्कारिकेणानुक्ताया व्याजनिन्दायाः कथमलङ्कारत्वेनाङ्गीकरणमित्याशङ्क्याह,—प्रतिबन्दीति, तुल्ययुक्त्या प्रतिबन्दीस्थानीयेत्यर्थः, तथा च स्तुतिवन्निन्दायामप्रस्तुतप्रशंसातीवै चित्र्यविशेषात्तदनन्तर्भावे व्याजस्तुतौ चार्थानुगमाभावादनन्तर्भावे पृथगलङ्कारताया औचित्यापातत्वात्प्राचीनैरनुक्तापि स्वीकर्त्तुमुचितेत्याशयः॥

ननु यत्रान्यस्तुत्यान्यस्तुतेरन्यनिन्दायान्यनिन्दायाश्च प्रतीतिः तत्र व्याजस्तुतिव्याजनिन्दालङ्कारयोरभ्युपगमे स्तुतिनिन्दारूपाप्रस्तुतप्रशंसोदाहरणेष्वप्रस्तुतप्रशंसा न वक्तव्या, तेषामपि व्याजस्तुतिव्याजनिन्दाभ्यां क्रोड़ीकारसम्भवादितिचेत्? उच्यते-प्रस्तुतवृत्तान्तः प्रतीयते यत्राप्रस्तुतवृत्तान्तात् स्तुतिनिन्दारूपा तत्सरूपः अन्तः छिद्राणि भूयांसीत्यादौ, तत्र लब्धावकाशा सारूप्यनिबन्धनाप्रस्तुतप्रशंसा अत्रापि वर्तमाना—न निवारयितुं शक्या, अन्यस्तुत्याऽन्यस्तुतिरन्यनिन्दयान्यनिन्देत्येवं व्याजस्तुतिव्याजः निन्दे अपिसम्भवतश्चेत्?—काम—ते अपि सम्भवेतां, नत्वस्याः परित्यागः। यद्यपि विधिरेव विशेषगर्हणीय—इति श्लोके विधिनिन्दया तन्मूलकाकनिन्दया चाविशेषज्ञस्य प्रभोस्तत्र च विद्वत्समतया स्थापितस्य मूर्खस्य च निन्दा प्रतीयत—इति तत्र सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसाप्यस्ति, तथापि सैव व्याजनिन्दामूलेति प्रथमोपस्थिता, सापि तत्र दुर्वारा, एवञ्च

प्रागुक्तयोरेवः कृतौ शकुन्तेष्विव-यादृक्कत्रिमित्यनयोरप्रस्तुतप्रशंसोदाहरणत्वासङ्गतिमाशङ्कते,—नन्विति, क्रोड़ीकारः स्वविषयीकरणं, अन्यत्र लब्धात्मकस्यालङ्कारद्वयस्य क्वचित्सङ्करेऽपि न दोष—इत्याशयेन समाधत्ते,—यत्रेति, एतच्च इत्यादात्रित्यनेनान्वितं, अस्याः अप्रस्तुतप्रशंसायाः; सैव अप्रस्तुतप्रशंसैव॥

व्याजनिन्दा-मूलकव्याजनिन्दा-रूपेयमप्रस्तुतप्रशंसेति चमत्कारातिशयः एवमेव व्याजस्तुतिमूलकव्याजस्तुतिरूपाप्यस्तुतप्रशंसा दृश्यते,

यथा वा—

लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः
स्वच्छन्दं चरतोजनस्य हृदये चिन्ताज्वरोनिर्मितः।
एषापि स्वगुणानुरूपरमणा भावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता॥

अत्राप्रस्तुतायास्तरुण्याः सृष्टिनिन्दाव्याजेन तन्निन्दाव्याजेन च तत्सौन्दर्य्यप्रशंसाप्रशंसनीयत्वेन कविविवक्षितायाः स्वकवितायाः सृष्टिनिन्दाव्याजेन तन्निन्दाव्याजेन च शब्दार्थचमत्कारातिशयप्रशंसायां पर्य-

लावण्येति, इमां तन्वीं तन्वता सृजता वेधसा चेतसि कोऽर्थः कामनाविषयभूतः विनिहितः अभिसंहितः किम्प्रयोजनमुद्दिश्येयं निर्मितेत्यर्थः। नन्वनायासेनातिसुन्दरतन्वीनिष्पत्तिरेव प्रयोजनं तदभावेपि वा लीलामात्रेण तन्निर्माणं स्यादत आह—लावण्येत्यादि। यतोलावण्यरूपस्य द्रविणस्य धनस्य व्ययो न गणितः महान् क्लेशोऽर्जितः कृतः स्वेच्छाचारिणोजनस्य उदासीनस्यापि हृदये चिन्तैव ज्वरोनिर्मितः। एषापि वराकी दीना स्वगुणानुरूपस्य वरस्याभावाद्धतैव हता नष्टप्राया; तथा च बह्वायाससाध्यत्वादनिष्टानुबन्धित्वाच्च न तन्व्याः प्रयोजनत्वं नापि लीलामात्रेण तन्निर्माणञ्च सम्भवतीति भावः॥

तन्निन्दाव्याजेन—तरुणीनिन्दाव्याजेन, तत्सौन्दर्य्यप्रशंसा

वक्ष्यति। अस्य श्लोकस्य वाच्यार्थविषये—यद्यपि नात्यन्तसामञ्जस्यं नहीमे विकल्पा वीतरागस्येति कल्पयितुं शक्यं, रसाननुगुणत्वात्, वीतरागहृदयस्याप्येवंविधविषयेष्वप्रवृत्तेश्च; नापि रागिण—इति यज्यते; तदीयविकल्पेषु वराकीति कृपणतालिङ्गितस्य हतेत्यमङ्गलोपहितस्य च वचसोऽनुचितत्वात्तुल्यरमणाभावादित्यस्यात्यन्तमनुचितत्वाच्च। स्वात्मनि तदनुरूपतासम्भावनायामपि रागित्वे हि पशुप्रायता स्यात्, तथापि विवक्षितप्रस्तुतार्थतायां न किञ्चिदसामञ्जस्यं, अतएवास्य श्लोकस्याप्रस्तुतप्रशंसापरत्वमुक्तं प्राचीनैः, वाच्यासम्भवेप्यप्रस्तुतप्रशंसोपपत्तेरिति ॥ ३१ ॥

शब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्यतीत्यन्वयः। तन्निन्दाव्याजेन—स्वकवितानिन्दाव्याजेन ॥

कविता सौन्दर्यरूपा, प्रस्तुतार्थस्यात्यन्तमस्फुटत्वात्कथमस्य पद्यस्य तत्परत्वमित्याशङ्कामपनेतुं भूमीकामारचयति,—अस्येत्यादि, रसाननुगुणत्वादिति, वीतरागे शृङ्गाररसासम्भवादिति भावः। ननु शृङ्गारासम्भवेऽपि तन्वीनिर्माणनिन्दया शान्तरसपरिपोषादस्त्येव रसानुगुणत्वमतआह,—वीतरागेति, नापि रागिण—इत्यनन्तरं इमे विकल्पा—इत्यनुषज्यते। विवक्षितेति, स्वकवितासौन्दर्यरूपेत्यर्थः, अतएव—वाच्यादौ सामञ्जस्यादेव, वाच्यासम्भवेपि—वाच्यसामञ्जस्यासम्भवेपि; तथा च वाच्यार्थासामञ्जस्यमेवास्फुटेप्यप्रस्तुतार्थे तात्पर्यं गमयतीतिभावः॥३१॥

इत्यलङ्कारचन्द्रिकायां व्याजनिन्दाप्रकरणम् ॥

॥ इति व्याजनिन्दा नामैकत्रिंशदलङ्कारः ॥ ३१ ॥

आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्।
चन्द्र! सन्दर्शयात्मानमथवास्ति प्रियामुखम्॥

अत्र प्रार्थितस्य चन्द्रदर्शनस्य प्रियामुखसत्त्वेनानर्थक्यं विचार्य्य अथवेत्यादिसूचितः प्रतिषेध आक्षेपः।

यथा वा—

साहित्यपाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः!
यत्तस्य दैत्या इव लुण्ठनाय
काव्यार्थचोराः प्रगुणीभवन्ति॥
गृह्णन्तु सर्वे यदि वा यथेच्छं
नास्ति क्षतिः क्वापि कवीश्वराणाम्।

आक्षेप इति, स्वयमुक्तस्यार्थस्य किञ्चिन्निमित्तमभिसन्धाय प्रतिषेध आक्षेपः।

सूचितेति, पक्षान्तरपरिग्रहस्य पूर्व्वपक्षप्रतिक्षेपनियतत्वादिति भावः। न चात्र कैमर्थ्यारूपपञ्चमप्रतीपप्रभेदेन गतार्थत्वं शङ्कनीयम् तस्यात्र प्रतिषेधप्रतिनिमित्तत्वेनाप्राधान्यात्॥

असन्दिग्धमुदाहरति—साहित्येति, हे कविश्रेष्ठाः! साहित्यसमुद्ररूपाणां भारतादीनां मन्थनादिव परिशीलनादुत्थितम् उत्पन्नं कर्णयोरमृतमिवाह्लादकं काव्यं रक्षत, यद् यस्मात् तस्य लुण्ठनाय दैत्या इव काव्यरूपस्यार्थस्य वित्तस्य चोराः प्रगुणीभवन्ति बहुलीभवन्तीत्यन्वयः॥

गृह्णन्त्विति, यदिवेत्यथवेत्यनेन समानार्थम्। लुण्ठितेषु अपहृतेषु।

रत्नेषु लुप्तेषु बहुष्वमर्त्यै-
रद्यापि रत्नाकर एव सिन्धुः ॥

अत्र प्रथमश्लोकेन प्रार्थितस्य काव्यार्थचोरेभ्यो रक्षणस्य स्वोल्लिखितवैचित्र्याणां समुद्रगतरत्नजालवदक्षयत्वं विचिन्त्य प्रतिषेध आक्षेपः।

निषेधाभासमाक्षेपम्बुधाः केच न मन्वते।
नाहं दूती तनोस्तापस्तस्याः कालानलोपमः ॥

केचिदलङ्कारसर्वस्वकारादय इत्थमाहुः—न निषेधमात्रमाक्षेपः किन्तु यो निषेधो बाधितः सन् अर्थान्तरपर्य्यवसितः किञ्चिद्विशेषमाक्षिपति स आक्षेपः॥ यथा दूत्या उक्तौ नाहं दूतीति निषेधो बाधितत्वादाभासरूपः॥ सङ्घटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्य्यवस्यन्निदानीमेवागत्य नायिकोज्जीवनीयेति विशेषमाक्षिपति। यथा वा—

नरेन्द्रमौले! न वयं राजसन्देशहारिणः।

स्वोल्लिखितेति, स्वयमुद्भावितेत्यर्थः; वैचित्र्याणाम् अर्थवैचित्र्याणाम्। अर्थान्तरपर्यवसितः अर्थान्तरप्रतियोगिकत्वेनावस्थितः; विशेषं व्यङ्ग्यार्थविशेषम्। सङ्घटनेति, संयोजनकाले उचितं यत्कैतववचनं मिथ्यावचनं तस्य परिहारस्तेनोपलक्षिते यथार्थवादित्वे इत्यर्थः। नाहं दूतीत्यत्र हि दूतीपदेन दूतीगतमिथ्यावादित्वविशिष्टं लक्ष्यते; तद्भावस्तु यद्यपि न यथार्थवादित्वं तथापि तदुपलक्षकत्वात्तत्पर्यवसानोक्तिः ॥

नरेन्द्रेति, सन्धिकरणार्थमागतानां दूतानामुक्तिः—नरेन्द्राणां

जगत्कुटुम्बिनस्तेन न शत्रुः कश्चिदीक्ष्यते ॥

अत्र सन्देशहारिणामुक्तौ न वयं सन्देशहारिण इति निषेधोऽनुपपन्नः सन्धिकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्य्यवसन् सर्वजगतीपालकस्य तव न कश्चिदपि शत्रुभावेनावलोकनीयः किन्तु सर्वेऽपि राजानो भृत्यभावेन संरक्षणीया इति विशेषमाक्षिपति ।

राज्ञां मौलिः श्रेष्ठः । सन्धीति, सन्धिकाले उचितं यत् कैतववचनं तत् परिहारेणोपलक्षिते इति पूर्ववदर्थः । अत्राहुः—सन्देशहारिषु तन्निषेधस्य बाधात् सन्देशहारिपदेन कैतववचनप्रयोक्तृत्वविशिष्टं लक्ष्यते, तन्निषेधेन च सत्यवादित्वरूपो विशेषो व्यज्यतइत्ययमेव निषेधेन विशेषाक्षेपो न तु सर्वजगतीपालस्येत्यादि विशेषानिषेधेन केवलेनाक्षेप्तुं शक्यते,तस्य जगत्कुटुम्बिनइत्युत्तरार्धगम्यत्वात् । एवं स्थिते कथमुच्यते—तव न कश्चिदपीत्यादीति? तत्रोच्यते—न वयमिति;निषेधमात्रे केवलादुत्तरार्धान्नोक्तविशेषावगतिः स्यात्, सन्धिकालोचितकैतववचनत्वेनैव सम्भाव्यमानत्वात् । अपितु तत्कालीनसन्ध्यभिप्रायमात्रावगमः, निषेधेन तु तत्परिहारे युक्तउक्तविशेषावगम इत्यनुभवसाक्षिकमेतत्, सत्यवादित्वादिकन्तूक्तविशेषे व्यञ्जनीये द्वारभूतं न तु तदेव विशेषरूपमचमत्कारित्वात् । अतएव 'नाहं दूतीत्यत्र वस्तुवादित्वादिर्विशेषोव्यज्यतइत्यलङ्कारसर्व्वस्वकारः, वस्तुवादित्वादिद्वारभूतं यस्य तादृशो विशेष इति तदर्थं इति । एतेन नाहं दूतीति पूर्व्वोदाहरणमपि व्याख्यातम् ॥

आक्षेपोन्यो विधौ व्यक्ते निषेधे च तिरोहिते।
गच्छ गच्छसि चेत्कान्त! तत्रैव स्याज्जनिर्मम॥

अत्र गच्छेति विधिर्व्यक्तः मागा इति निषेधस्तिरोहितः कान्तोद्देशे निजजन्मप्रार्थनयात्ममरणसंसूचनेन गर्भीकृतः।

यथा वा—

न चिरं मम तापाय तव यात्रा भविष्यति।
यदि यास्यसि यातव्यमलमाशङ्कयापि ते॥

अत्रापि न चिरं मम तापायेति स्व-मरण-संसूचनेन गमननिषेधो गर्भीकृतः॥ ३२॥

तस्यैव प्रयोजनान्तरमाह—आक्षेपोन्य इति, प्रार्थनया मरणसूचनद्वारेण गर्भितः व्यङ्ग्यत्वेनान्तर्भावितः; एतच्च तिरोहितइत्यस्यार्थकथनम्; तदेवमप्रकृतिभिन्नत्वे सति चमत्कारकारिनिषेधत्वं सामान्यलक्षणंबोध्यम्॥ ३२॥

॥ इत्यलङ्कारचन्द्रिकायामाक्षेपालङ्कारप्रकरणम्॥

---

॥ इत्याक्षेपोनाम द्वात्रिंशदलङ्कारः॥३२॥

आभासत्वे विरोधस्य विरोधाभास इष्यते।
विनापि तन्वि ! हारेण वक्षोजौ तव हारिणौ॥

अत्र हाररहितावपि हारिणौ हृद्याविति श्लेषमूलको विरोधाभासः।

यथा वा—

प्रतीपभूपैरिव किं ततोभिया
विरुद्धधर्मैरपि भेत्तृतोज्झिता।

आभासत्वइति, विरोधस्य आभासत्वे आपाततो भासमानत्वे सति विरोधाभासोनामालङ्कारः। आभासत इत्याभासः, विरोधश्चासावाभासश्चेति व्युत्पत्तेः ईषदर्थकेन चाङा भानस्यापातरूपत्वमर्थान्तरपरिहार्य्यत्वरूपम्बोध्यते। तथाचैकाधिकरण्येन प्रतीयमानयोः कार्य्यकारणत्वेनाग्टह्यमाणयोर्धर्मयोराभासमानाऽपर्य्यवसन्नविरोधत्वं लक्षणं द्रष्टव्यम्। शनिरशनिश्च तमुच्चैरित्यादावतिव्याप्तिवारणायाद्यं विशेषणम्। अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयमिति विभावनावारणाय द्वितीयम्। पर्य्यवसितस्य विरोधस्य दोषत्वादपर्य्यवसन्नत्वं विरोधविशेषणमिति दिक्। श्लेषेति, हारोऽनयोरस्तीत्यर्थे विरोधः मनोहारिणावित्यर्थेन तत्परिहारः॥

प्रतीपेति, तस्मान्नलात् भयेन कृत्वा प्रतिकूलनृपैरिव विरुद्धधर्मैरपि भेत्तृता भेदकारिता त्यक्ता; किमित्युत्प्रेक्षा। यस्मात् स नलः अमित्राणां शत्रूणां जयकृदपि ओजसामित्रस्य रवेर्जयकृत् अथ च मित्रजिदेव न मित्राजिदिति विरोधः। चारदृष्टिरपि

अमित्रजिन्मित्रजिदोजसा-
स यद्विचारदृक् चारदृगप्यवर्तत ॥

अत्र विरोधसमाधानोत्प्रेक्षाशिरस्को विरोधा-
भास इति पूर्वस्माद्भेदः ॥ ३३ ॥

विचारे दृष्टिर्यस्य तादृशः, विगतचारदृगिति च विरोधः ॥ विरो-
धेति, विरोधसमाधानरूपोत्प्रेक्षा शिरः प्रधानं यस्य तादृश
इत्यर्थः । यत्तु विरोधसमाधानात्मिकया मुखस्थितयोत्प्रेक्षया-
विरोधस्योत्थानमेव भग्नमिति कथमत्र विरोधालङ्कार इति केन
चित् सुमनसापि विमनसेवाभिहितं तदसारम्, विरोधभानम-
न्तरेण विरुद्धधर्मैरपोत्यादुत्प्रेक्षायाएवानुत्थानेन श्लेषमूलमा
भासमानं विरोधमुपजीव्यैव विरोधभागोत्प्रेक्षाया अर्थान्त-
रानुगृहीतायास्तत्समाधानत्वेन पश्चादवस्थितत्वादिति ॥ ३३ ॥

॥ इत्यलङ्कारचन्द्रिकायां विरोधाभासप्रकरणम् ॥

—०—

॥ इति विरोधाभासोनाम त्रयस्त्रिंशदलङ्कारः ॥३३ ॥

विभावना विनापि स्यात्कारणं कार्य्यजन्म चेत्।
अप्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥

अत्र लाक्षारसासेकरूपकारणाभावेऽपि रक्तिमा-कथितः स्वाभाविकत्वेन विरोधपरिहारः।

यथा वा—

अपीतक्षीबकादम्बमसम्मृष्टामलाम्बरम्।
अप्रसादितसूक्ष्माम्बु जगदासीन्मनोरमम् ॥

विभावनेति प्रसिद्धे कारणाभावेपि कार्य्योत्पत्तिर्विभावनालङ्कारः, विभाव्यते कारणान्तरं यस्यामिति व्युत्पत्तेः। कारणाभावश्च शाब्दश्चार्थोवेति, सर्व्वत्र लक्षणसमन्वयोबोध्यः। एतेनैव तन्त्रेण सकलविभावनाप्रकारसाधारणं सामान्यलक्षणमाद्यप्रकारविशेषलक्षणञ्च बोध्यम्। तत्राद्यं दर्शितमेव। द्वितीयं तु कारणान्विताभावकथनपूर्व्वकं कार्य्योत्पत्तिकथनमित्युदाहरणविशेषबलादेव गम्यतइति विविच्य न दर्शितम्। प्रतिबन्धके सति, कार्य्योत्पत्तिरूपे तृतीयप्रकारेऽतिव्याप्तिर्वारणायान्वितेति, तत्र प्रतिबन्धकस्य वस्तुनः कारणाभावरूपस्य कथनेपि न कारणान्वितत्वेन कथनमिति तन्निरासः। प्रकारपञ्चकेपि कारणान्विताभावस्यार्थतो गम्यत्वात् कथनेति। अत्र लाक्षेति, लाक्षारसेन आ समन्तात् सिक्तं लाक्षारससिक्तं पश्चान्नञ्समासः। तस्याः कामिन्याः ॥

अपीतेति, अपीताः पानशून्याः क्षीबा मत्ताः कादम्बाः कलहंसा यत्र तथा असंमृष्टं संमार्जनशून्यममलमम्बरमाकाशं यत्र, एवमप्रसादितं वस्त्रगालनकतकक्षोदप्रक्षेपादिना यत् प्रसादनं तच्छून्यं सूक्ष्मं लघ्वम्बु यत्रैवम्भूतं जगन्मनोहरमासीदित्यन्वयः।

अत्र पानादिप्रसिद्धहेत्वभावेपि क्षीबत्वादिनिबद्धं विभाव्यमानयौवनमयहेतुकत्वेन विरोधपरिहारः।

यथा वा—

वरतनुकबरीविधायिना सुरभिनखेन नरेन्द्रपाणिना।
अवचितकुसुमापि वल्लरी समजनि हन्तनिलीनषट्पदा॥

अत्र वल्लर्य्यां पुष्पाभावेपि भृङ्गालिङ्गनं निबद्धं तत्र वरतनुकबरीसङ्क्रान्तसौरभनरपतिनखसंसर्गरूपं हेत्वन्तरं विशेषणमुखेन दर्शितमिति विरोधपरिहारः॥

हेतूनामसमग्रत्वे कार्य्योत्पत्तिश्च सामता।
अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः॥

अत्र जगज्जये साध्ये हेतूनामस्त्राणामसमग्रत्व तीक्ष्णत्वादि गुणवैकल्यम्॥

यथा वा—

उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः।
उदस्रयन्ति पान्थानामस्पृशन्तोविलोचने॥

परमार्थतस्तु युवाम्बिल्विव काव्यादर्शे दृष्टः पाठः। विभाव्यमानेति, वर्ण्यमानेनेत्यर्थः। वरेति, वरतनोः केशपाशरचनासम्पादकेन अतएव सुरभिनखेन राज्ञो हस्तेन अवचितकुसुमा लूनपुष्पापि लताहन्तासक्तभ्रमरा सञ्जातेत्यर्थः॥

हेतूनामिति, असमग्रत्वे हेतुतावच्छेदकस्य धर्म्मस्य तत्सम्बन्धस्य वा वैकल्ये सति अस्त्रैरिति धर्म्मवैकल्योदाहरणम्। सम्बन्धवैकल्ये उदाहरति—उद्यानेति, विलोचने कर्म्मभूते

अत्र बाष्पोद्गमनहेतूनामसमग्रत्वं स्पर्शनक्रियावैकल्यम्—इमां विशेषोक्तिरिति दण्डी व्याजहार, यतस्तत्र प्रथमोदाहरणे मन्मथस्य महिमातिशयरूपो द्वितीयोदाहरणे चम्पकरेणूनामुद्दीपकतातिशयरूपश्च विशेषः ख्याप्यत इति, अस्माभिस्तु तीक्ष्णत्वादिवैकल्यमपि कारणविशेषाभावमिति विभावना प्रदर्शिता॥

कार्योत्पत्तिस्तृतीया स्यात् सत्यतिप्रतिबन्धके।
नरेन्द्रानेव ते राजन् दशत्यसिभुजङ्गमः॥

अत्र नरेन्द्रा विषवैद्याः सर्पदंशप्रतिबन्धकमन्त्रौषधिशालिनः श्लेषेण गृहीता इति सत्येव प्रतिबन्धके कार्योत्पत्तिः॥ यथा वा—

उदस्रयन्ति उन्नताग्राणि कुर्वन्तीत्यर्थः। क्रियेति धात्वर्थत्वाभिप्रायं स्पर्शनस्य संयोगरूपत्वात्—इमां द्वितीयप्रकाररूपां विभावनाम्—व्याजहारेति, गुणजातिक्रियादीनां यत्र वैकल्यदर्शनं विशेषदर्शनायैव, सा विशेषोक्तिरिष्यत इति ग्रन्थेन व्यवहृतवानित्यर्थः; एतेन प्रथमप्रकारात् द्वितीयप्रकारस्य वैलक्षण्यं दुरुपपादमिति वदन्नपास्तः। वैलक्षण्याभावे हि प्राचामलङ्कारान्तरत्वेन कथनमत्यन्तानुपपन्नमेव स्यात्; अस्ति च स्वरूपतः कारणाभावकथनात् कारणगतधर्मवैकल्यद्वारेण तद्विशिष्टकारणाभावकथने सहृदयसिद्धाविच्छित्तिविशेषप्रकारान्तरास्वीकारे लाघवमिति तु स्वीयलाघवोद्भावनमिति कृतमधिकेन॥ कार्योत्पत्तिरिति, प्रतिबन्धके सत्यपि कार्योत्पत्तिकथनं—तृतीया विभावना। नरेन्द्रानिति, नरेन्द्रो वार्त्तिके राज्ञि विषवैद्येपि कथ्यत इति विश्वः। असिः खड्ग एव भुजङ्गमः॥

चित्रं तपति राजेन्द्र ! प्रतापतपनस्तव ।
अनातपत्रमुत्सृज्य सातपत्रं द्विषज्जनम् ॥
अकारणात् कार्यजन्म चतुर्थी स्याद्विभावना ।
शङ्खाद्वीणानिनादोयमुदेति महदद्भुतम् ॥

अत्र शङ्खत्वेन कल्पनीयः कामिनीकण्ठस्तन्त्री निनादत्वं न तद्गीतञ्चाध्यवसीयत इत्यकारणात् कार्यजन्म ॥ यथा वा—

तिलपुष्पात् समायाति वायुश्चन्दनसौरभः ।
इन्दीवरयुगाच्चित्रं निःसरन्ति शिलीमुखाः ॥
विरुद्धात् कार्यसम्पत्तिर्दृष्टा काचिद्विभावना ।
शीतांशुकिरणास्तन्वीं हन्त ! सन्तापयन्ति ताम् ॥

अत्र तापनिवर्तकतया तापविरुद्धैरिन्दुकिरणै-स्तापजनिरुक्ता ॥ यथा वा—

उदिते कुमारसूर्ये कुवलयमुल्लसति भाति नक्षत्रं ।
मुकुलीभवन्ति चित्रं ! परराजकुमारपाणिपद्मानि ॥

चित्रमिति, प्रताप एव तपनः सूर्यः आतपत्रं छत्रं तद्रहितमनातपत्रं आतपत्रेण सहितं सातपत्रम् ॥ उदित इति, कस्यचिद्राजकुमारस्य प्रतापवर्णनं; कुमाररूपे सूर्ये उदिते सति कोः पृथिव्या वलयं मण्डलमेव कुवलयं कुमुदमुल्लासं प्राप्नोति; क्षत्रं क्षत्रियकुलं न भाति अथ च नक्षत्रं भातीति चित्रं ! तथापरेषां राजकुमाराणां पाणिकमलानि मुकुलीभवन्ति सङ्कुचन्ति अञ्जलिबन्धात्तदाकृतीनि भवन्तीत्यर्थः ॥

यथा वा—

अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्त्रयं।
श्रुतिप्रणयिनोरच्णोरयुक्तं जनमारणम्॥

पूर्वोदाहरणयोः कारणस्य कार्यविरोधित्वं स्वाभाविकम्, इह तु श्रुतिप्रणयित्वरूपागन्तुकगुणप्रयुक्तमिति भेदः॥

कार्य्यात्कारणजन्मापि दृष्टा काचिद्विभावना।
यशः पयोराशिरभूत्करकल्पतरोस्तव॥

यथा वा—

जाता लता हि शैले जातु लतायां न जायते शैलः।
सम्प्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम्॥

अविवेकीति, विवेकोविशेषदर्शनं विश्लेषश्च तच्छून्यं परस्परं संश्लिष्टत्वात्; कुचयुगं कर्तृ, जगत्त्रयं हन्तु नाम; श्रुतिर्वेदः कर्णश्च; प्रणयः परिचयः॥ यश इति,करएव दातृत्वात् कल्पतरुः। अत्र पयोधिजन्यात् कल्पतरोः कारणस्य पयोधेरुत्पत्तिः षष्ठी विभावना॥ जातेति, जातु कदाचित् कनकलतेव कनकलता कामिनी, गिरिद्वयमिव स्तनद्वयम्॥ ३४॥

॥ इत्यलङ्कारचन्द्रिकायां विभावनाप्रकरणम्॥

—:—

॥ इति चतुस्त्रिंशदलङ्काराः॥ ३४॥

विशेषोक्तिः ॥

कार्य्याजनिर्विशेषोक्तिः सति पुष्कलकारणे ।
हृदि स्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपि ॥

यथा वा—अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥ ३५ ॥

असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम् ।
को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥
अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।

विशेषोक्तिं लक्षयति—कार्य्याजनिरिति, पुष्कले सहकारिसम्पन्ने; कारणे सति प्रसिद्धकारणसमूहे सतीति यावत्; कार्य्यस्याजनिरनुत्पत्तिर्विशेषोक्तिः—विशेषस्य अनुत्पत्तिनिमित्तस्योक्तिरवगतिर्यत्रेति व्युत्पत्तेः ॥

अनुरागेति, अनुरागो रक्तिमा रतिश्च, पुरःसरोऽग्रवर्त्ती आज्ञाकरश्च, पूर्व्वोदाहरणेऽनुक्तनिमित्ता इह दैवगतिवैचित्र्यस्य निमित्तस्योपादानादुक्तनिमित्तेति भेदः ॥३५॥ इति विशेषोक्तिप्रकरणम् ॥

असम्भव इति, कस्यचित्पदार्थस्य निष्पत्तेरसम्भावनीयत्ववर्णनमसम्भवोनामालङ्कारः । गोपशिशुकः गोपालबालकः; निन्दायां स्वार्थे वा कः प्रत्ययः;उत्पाटयेत् उद्धरेत् । अयमिति, वारां जलानां निलयः स्थानं तृष्णा पिपासा अर्थाभिलासश्च तरलितं चञ्चलीकृतं श्रितः आश्रितः मुनिरगस्त्यः एनं समुद्रं क्षणात् आसमन्तात् पास्यति, इदं को जानिते ? इत्यन्वयः । कीदृशं निजकरपुटीकरसम्पुटमेव कोटरं विलं तद्गतं तथा ताम्यन्तोग्लायन्तस्तिमयोमत्स्या मकराश्च यस्यैवम्भूतमित्यर्थः ॥ ३६ ॥ इत्यसम्भवः ॥

क एवं जानीते निजकरपुटीकोटरगतम्।
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥३६॥

विरुद्धं भिन्नदेशत्वं कार्य्यहेतोरसङ्गतिः।
विषं जलधरैः पीतं मूर्च्छिताः पथिकाङ्गनाः ॥

ययोः कार्यहेत्वोर्भिन्नदेशत्वं विरुद्धं तयोस्तन्निबध्यमानमसङ्गत्यलङ्कारः; यथात्र विषपानमूर्च्छयोर्भिन्नदेशत्वम्॥

अहो! खलभुजङ्गस्य विचित्रोयं बधक्रमः।
अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते॥

क्वचिदसङ्गतिसमाधाननिबन्धनेन चारुतातिशयः।
यथा वा—अजस्रमारोहसि दूरदीर्घां
सङ्कल्पसोपानततिं तदीयाम्।

विरुद्धमिति, अदृष्टमित्यर्थः; भिन्नदेशत्वं भिन्नाधिकरणत्वं विषं जलं हालाहलञ्च (सङ्गतस्य भावः साङ्गत्यं तदभावोऽसाङ्गत्यम्)॥ अजस्रमिति, दमयन्तीं प्रति हंसोक्तिः—हे दमयन्ति! त्वं तदीयां नलसम्बन्धिनीं दूरमत्यन्तं दीर्घां सङ्कल्पो मनोरथस्तद्रूपसोपानपरम्परां अजस्रं निरन्तरमारोहसि; स पुनर्नलः अधिकं श्वासान् वर्षति मुञ्चतीति यत्तत्त्व ध्यानात्त्वन्मयतां त्वत्स्वरूपतामवापेत्यन्वयः। अत्र चतुर्थपादेनासङ्गतिसमाधानम्॥

ग्रासान् स वर्षत्यधिकं पुनर्य-
द्ध्यानात्तव त्वन्मयतामवाप्य ॥

विरुद्धमिति विशेषणादत्र कार्य्यहेत्वोर्भिन्नदेशत्वं न विरुद्धं तत्र नासङ्गतिः।

यथा वा—

भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम्।
तावत् कटाक्षविशिखैर्भिद्यते हृदयं मम॥
अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा।
अन्यत् कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा॥
अपारिजातां वसुधां चिकीर्षन् द्यां तथाकृथाः।
गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराकरोः॥

भ्रूचापेति, भ्रूचापवल्लीं भ्रूस्वरूपधनुर्लतां; यावदिति परिमाणार्थं, वक्रतां नयति आकर्षतीति यावत् तावत् परिमाणं हृदयं भिद्यत इत्यर्थः; अत्र हृदयभेदधनुराकर्षणयोः कार्य्यकारणयोर्भिन्नदेशत्वमेव दृष्टमिति नासङ्गतिरलङ्कारः॥ अन्यत्रेति, अन्यत्र कर्तव्यस्य वस्तुनस्ततोन्यस्मिन्नधिकरणे या कृतिः करणं तदपि असङ्गतिरित्यनुषज्यते; तथा अन्यत्कार्य्यं कर्तुं प्रवृत्तस्य तद्विरुद्धकार्य्यकरणं तृतीया असङ्गतिः। अपगतमरिजातं यस्याः स्तां द्यां स्वर्गं तथा पारिजाततरुरहितां अकृथाः कृतवान् एवं गोत्रायाः पृथिव्या उद्धाराय पुरा वराहावतारे प्रवृत्तोऽपि, त्वं गोत्राणां पर्वतानामुद्भेदं दलनमकरोः कृतवानित्यर्थः॥

अत्र कृष्णं प्रति भक्तस्य सोपालम्भवचने भवि चिकीर्षिततया तत्र करणीयं अपारिजातत्वं द्विव कृतमित्येकासङ्गतिः; पुरा गोत्राया उद्धारे प्रवृत्तेन वराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्विविधापि श्लेषोत्थापिता ॥ यथा वा—

त्वत्खड्गखण्डितसपत्नविलासिनीनाम्
भूषा भवन्त्यभिनवा भुवनैकवीर!।
नेत्रेषु कङ्कणमथोरुषु पत्रवल्ली
चोलेन्द्रसिंह! तिलकं करपल्लवेषु ॥
मोहं जगत्त्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वर! देहभाजम्।
निःसीमकान्तिरसनीरधिनामुनैव
मोहं प्रवर्द्धयसि मुग्धविलासिनीनाम् ॥

श्लेषोत्थापिता, श्लेषमूलकाभेदाध्यवसायोत्थापिता ॥ यथा· वेति, हे भुवनैकवीर!—चोलदेशाधिप सिंहसदृश! तव खड्गेन खण्डिता ये सपत्नाः शत्रवः स्तद्विलासिनीनामभिनवा अदृष्टपूर्व्वा भूषा भूषणानि भवन्ति यथा नेत्रेषु कङ्कणं जलकण-मेव कङ्कणं वलयं भवतीत्यसम्बन्धः; अथेति समुच्चये, ऊरुषु च पत्रयुक्ता वल्ली सैव पत्रिकारचना करपल्लवेषु तिलयुक्तं कं जलमेव ललाटभूषणमिति ॥ मोहमिति हे अखिलेश्वर! जगत्त्रयवर्त्तिनां देहधारिणां मोहमपनेतुं एतत् रूपं कृष्णशरीरमादाय मर्य्या-दातिक्रान्तकान्तिरूपरससमुद्रेणामुनैव रूपेण सुन्दरस्त्रीणां मोहं प्रवर्द्धयसीत्यन्वयः ॥

अत्राद्योदाहरणे कङ्कणादीनामन्यत्र कर्तव्यत्वं प्रसिद्धमिति नोपन्यस्तं भवतिना भावना रूपा अन्यत्र कृतिराक्षिप्यत इति लक्षणानुगतिः ॥

अत्रेति, अनयोर्मध्य इत्यर्थः। आद्योदाहरणे इति लक्षणानुगतिरित्यन्वयः। भवतिना भवत्यर्थेन भवनेनेति यावत्। भावनारूपा भवनप्रयोजकव्यापाररूपा। यत्तु—अन्यत्र करणीयस्येत्याद्यसङ्गतिप्रकारद्वयान्तरकथनमयुक्तं, अपारिजातामितुदाहरणे पारिजातराहित्यचिकीर्षारूपकारणस्य कार्येण पारिजातराहित्येन वैय्यधिकरण्योपनिबन्धनेन प्राथमिकासङ्गतितो वैलक्षण्यानुपपत्तेः; आलम्बनाख्यविषयतासम्बन्धेन चिकीर्षायाः सामानाधिकरण्येन कार्य्यमात्रं प्रति हेतुत्वात्; एवं नेत्रेषु कङ्कणमित्यादौ कङ्कणत्वनेत्रालङ्कारत्वयोर्विरुद्धयोः सामानाधिकरण्यवर्णनाद्विरोधाभासत्वमुचितम्; एवं गोत्रोद्धारप्रवृत्तोपीत्युदाहरणे विरुद्धात् कार्य्यसम्पत्तिर्दृष्टा काचिद्विभावनेत्युक्तविभावनाप्रकारेणैव गतार्थत्वादसङ्गतिभेदान्तरकल्पनानुचिता; मोहमित्यादावपि मोहनिवर्तकत्वमोहजनकत्वयोर्विरुद्धयोरेकत्रवर्णनाद्विरोधाभासएवेति केश्चिदुक्तं तदसङ्गतम्, उक्तसम्बन्धेन चिकीर्षाया हेतुत्वासिद्धेः, न हि यदधिकरणे कार्यचिकीर्षा तदधिकरणमन्तर्भाव्योक्तसम्बन्धेन चिकीर्षायाः कार्य्यहेतुत्वं तान्त्रिकसम्मतं युक्तं वा; अन्यत्र चिकीर्षितस्यापि प्रमादादिनान्यत्रकरणेन व्यभिचारात्। अतएवैवम्विधवैय्यधिकरण्यस्य विरुद्धत्वादपि न प्राथमिकासङ्गत्यन्तर्भावसम्भवः। वस्तुतस्तु विषं जलधरैः पीतं मूर्च्छिताः पथिकाङ्गना इत्यत्रेव नात्र कार्य्यकारणवैय्यधिकरण्य-

विषमं वर्ण्यते यत्र घटनाननुरूपयोः।
क्वेयं शिरीषमृद्वङ्गी क्व तावन्मदनज्वरः॥

अत्रापि मृदुत्वेनातिदुःसहत्वेन चाननुरूपयोरङ्गनामदनज्वरयोर्घटना॥ यथा वा—

प्रयुक्तोविच्छित्तिविशेषोपित्वन्यत्र कर्तव्यस्यान्यत्र करणप्रयुक्त एवेति सहृदयमेव प्रष्टव्यम्—एवं नेत्रेषु कङ्कणमित्यत्र सत्यपि विरोधाभासेऽन्यत्र चमत्कारित्वेन क्रमालङ्कारभावाऽन्यत्र करणरूपा असङ्गतिरपि प्रतीयमाना न शक्या निराकर्तुम्; एवं गोत्रोद्धारप्रवृत्तोपीत्युदाहरणे गोत्रोद्धारविषयकप्रवृत्तेर्गोत्रोद्भेदरूपकार्यविरुद्धत्वात् विरुद्धा कार्य्यसम्पत्तिरपि विभावनेत्यपि न युक्तं गोत्रोद्धारप्रवृत्तेर्गोत्रोद्भेदनिवर्तकत्वाभावेन तद्विरुद्धत्वाभावात्, कथञ्चित्तदभ्युपगमेपि अन्यत् कार्य्यं कर्तुं प्रवृत्तेन तद्विरुद्धकार्य्यान्तरकरणरूपासङ्गतिरपि मोहं जगत्त्रयभुवामित्यादौ चमत्कारित्वेन लब्धात्मिका न निवारयितुं शक्यते। नचात्रापि मोहनिवर्तकान्मोहोत्पत्तेः सैव विभावनेति वाच्यं? मोहनिवर्तकस्य सिद्धवदत्र प्रतीतेः; अतएव न विरोधाभासोपि। विशेषोक्तिकथनन्त्वत्रासङ्गतमेव, न हि गोत्रोद्धारविषयकप्रवृत्तिरूपकारणसत्वेपि गोत्रोद्धाररूपस्य कार्य्यस्यानुत्पत्तिरिह प्रतिपाद्यते किन्तु विरुद्धकार्योत्पत्तिरेवेति विभावनीयम्॥

॥ इत्यसङ्गतिप्रकरणम्॥ ३७॥

विषममिति, परस्परमानुरूप्यरहितयोः पदार्थयोर्यत्र घटनासम्बन्धोवर्ण्यते तत्र विषमं नामालङ्कारः। सम्बन्धश्च संयोगादिः, उत्पाद्योत्पादकभावश्चेति सर्वप्रकारसाधारणमेतल्लक्षणं बोध्यम्॥

अभिलषसि यदीन्दो! वक्त्रलक्ष्मीं मृगाक्ष्याः।
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम्॥
सुविमलमथबिम्बं पारिजातप्रसूनैः।
सुरभय वदनोचेत्त्वं क्व तस्या मुखं क्व॥

पूर्वत्र वस्तुसती घटना अत्र च चन्द्रवदनलक्ष्म्योः ताक्किता घटनेति भेदः॥

विरूपकार्यस्योत्पत्तिरपरं विषमं मतम्।
कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका॥

अत्र कारणगुणप्रक्रमेण विरुद्धाच्छ्यामाद्धवलोत्पत्तिः—कार्यकारणयोर्निवर्त्यनिवर्तकत्वे पञ्चमी विभावना; विलक्षणगुणशालित्वे त्वयं विषम इति भेदः॥

अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थं समुद्यमात्।
भक्ष्याशया हि मञ्जूषां दृष्ट्वाखुस्तेन भक्षितः॥

अभिलषसीति, अङ्कं कलङ्कं संचालय प्रचालय अथ प्रचालनानन्तरं नोचेत्तस्या मुखं क्व त्वं क्व इति वदेत्यन्वयः। वस्तुसती वस्तुगत्या विद्यमाना; चन्द्रेति चन्द्रस्य वदनलक्ष्म्याश्च तयोरित्यर्थः विरूपकार्य्यस्येति, कारणविलक्षणस्वरूपस्येत्यर्थः; कृपाणिका खड्गप्रक्रमेणेति, प्रक्रमः परिपाटी स्वसजातीयकार्य्यगुणोत्पादकत्वरूपा विरुद्धा कार्यसम्पत्तिरिति॥

पञ्चमविभावनाप्रकारेणाभेदामाशङ्क्याह—कार्येति, अयं विषमः उक्तविषमालङ्कारप्रभेदः॥

तृतीयप्रकारमाह—अनिष्टस्यापीति, अपिर्भिन्नक्रमः; इष्टार्थसमुद्यमात् अनिष्टस्याव्याप्तिरपि च तत् विषममित्यर्थः; अपिना इष्टानवाप्तिः संगृह्यते, चकारः पूर्वोक्तविषमसमुच्चयार्थः।

इष्टार्थमुद्दिश्य किञ्चित्कर्म्मारब्धवतो न केवलमिष्टस्यानवाप्तिः किन्तु ततोऽनिष्टस्यापि प्रतिलम्भश्चेत्तदपि विषमं, यथा भक्ष्यप्रेप्सया सर्पपेटिकां दृष्ट्वा प्रविष्टस्य मूषकस्य न केवलं भक्ष्यालाभः किन्तु स्वरूपहानिरपीति।

गोपाल इति कृष्ण! त्वं प्रचुरक्षीरवाञ्छया।
श्रितोमातृस्तनक्षीरमप्यलभ्यं त्वया कृतं॥

इदमर्थावाप्तिरूपेष्टार्थसमुद्यमादिष्टानवाप्तावनिष्टप्रतिलम्भे चोदाहरणं अनर्थपरिहारार्थरूपेष्टार्थसमुद्यमात्तदुभयम्॥

यथा—

दिवि स्थितवतश्चन्द्रं सैंहिकेयभयाद्भुवि।
शशस्य पश्य तन्वङ्गि! साश्रयस्य ततो भयम्॥

भक्ष्येति, अहिमञ्जूषां सर्पपेटिकां दृष्ट्वा भक्ष्यस्याशया प्रविष्ट आखुर्मूषकस्तेनाहिना भक्षित इत्यन्वयः। यत्तु प्रविष्टइत्यस्यागम्यमानत्वान्न्यूनपदत्वमिति केनचिदुक्तं, तदभिनिवेशदुष्टस्वहृदयानुभवविकत्थनमित्युपेक्षणीयम्। अनिष्टस्यापि प्रतिलम्भइत्यत्राप्यपिर्भिन्नक्रमोबोध्यः। गोपाल इति, हे कृष्ण! त्वं गोपाल इति हेतोर्बहुदुग्धवाञ्छयाश्रितः आश्रितः, त्वया तु मातृस्तनदुग्धमप्यलभ्यं कृतं मुक्तिदानेनेति भावः। पूर्वत्रेष्टानवाप्तिरर्थगम्या इहत्वपिशब्दगम्येति विशेषः॥ इदमिति, उदाहरणमिति च जातावेकवचनम्॥ दिवीति, भुवि सैंहिकेयस्य सिंहीपुत्रस्य सिंहस्य भयात् दिवि आकाशे चन्द्रमाश्रितवतः शशस्य साश्रयस्याश्रयसहितस्य ततः सैंहिकेया-

अत्र न केवलं शशस्य स्वानर्थपरिहारानवाप्तिः किन्तु साश्रयस्याप्यनर्थावाप्तिरिति दर्शितम्। परानिष्टप्रापणरूपेष्टार्थसमुद्यमात्तदुभयं यथा—

दिधक्षन् मारुतेर्वालं तमादीप्य दशाननः।
आत्मीयस्य पुरस्यैव सद्यो दहनमन्वभूत्॥

पुरस्यैवेत्येवकारेण परानिष्टप्रापणाभावो दर्शितः। अनिष्टस्याप्यवाप्तिश्चेति श्लोकेऽनिष्टावाप्तेरपि शब्दसंगृहीताया इष्टानवाप्तेश्च प्रत्येकमपि विषमपदेनान्वयः। ततश्च केवलानिष्टप्रतिलम्भः केवलेष्टानवाप्तिश्चेत्यन्यदपि विषमद्वयं लक्षितं भवति। तत्र केवलानिष्टप्रतिलम्भो यथा—

पद्मातपत्ररसिके सरसीरुहस्य
किम्बीजमर्पयितुमिच्छसि वापिकायाम्।

द्राहीर्भयमेतत्—हे तन्वङ्गि! पद्मेत्यन्वयः। परेति, परस्यानिष्टावाप्तिरूपोयइष्टार्थ इत्यर्थः। तदुभयम्, इष्टानवाप्त्यनिष्टावाप्तिद्वयम्॥ दिधक्षन्निति, दशाननो रावणः मारुतेर्हनुमतो बालं पुच्छं दग्धुमिच्छन्तं वालमादीप्य द्दीपयतिस्मेत्यर्थः। प्रत्येकमपीति, अपिना इष्टानवाप्तिसमुच्चिताया अनिष्टावाप्तेर्विषमपदेनान्वयः समुच्चीयते। विषमपदेन, विषमपरामर्शकेन तत्पदेन तथा च तात्पर्य्यबलाद् वाक्यमावर्तनीयमिति भावः। यत्त्वनिष्टस्यैव तदुत्तरापिशब्दसमुचिताया इष्टानवाप्तेरप्याप्नोतिनैवान्वयो न तु तत्पदपरामृष्टेन विषमेण अव्युत्पत्तेरिति तत्प्रागेवापिशब्दान्वयव्याख्यानेन निरस्तं वेदितव्यम्॥ पद्मेति, दयितां प्रति नायकोक्तिः—पद्मस्यातपत्रं छत्रं तत्र रसिके हे तन्वि! वापिकायां सरसीरुहस्य

कालः कलिर्जगदिदं न कृतज्ञमङ्गे ।
स्थित्वा हरिष्यति मुखस्य तवैव लक्ष्मीम् ॥

अत्र पद्मातपत्रलिप्सया पद्मबीजावापं कृतवत्यास्तल्लाभोऽस्त्येव किन्तु मुखशोभाहरणरूपोत्कटानिष्टप्रतिलम्भः । केवलेष्टानवाप्तिर्यथा—

खिन्नोसि शैलं विभृमोवयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविततबाहुषु गोपेषु हसन् हरिर्जयति ॥

अत्र यद्यपि शैलस्योपरि पतनरूपानिष्टावाप्तिरपि प्रसक्ता तथापि भगवत्कराम्बुजसंसर्गमहिम्ना सा न जातेति शैलधारणरूपेष्टानवाप्तिमात्रम् ॥

पद्मस्य कान्दर्पयितुं किमिच्छसि ? यतः हे अङ्ग ! कलियुगरूपः कालः इदं जगत् कृतज्ञं च न भवति । ततः किं ? तत्राह—इदं सरसीरुहं स्थित्वा तवैव मुखस्य लक्ष्मीं हरिष्यति नत्वन्यस्या इत्यर्थः । खिन्नोसीति, विभृमः धारयामः वदत्सु गोपेषु शिथिलौ भुजौ यस्य सः भरेण शैलभारेण भुग्ना वक्राः वितता विस्तीर्णा बाहवो येषां तथाभूतेषु सत्सु हसन् ॥

अत्रेति, न च भरभुग्नेत्यनेन बाहुगतास्थिसन्धिभङ्गरूपानिष्टप्राप्तेः साक्षादुपात्तत्वात्सर्व्वाङ्गचूर्णीभावगर्त्तापहाररूपायाश्च स्फुटं गम्यमानत्वात्कथमिष्टाप्राप्तिमात्रमित्युच्य—तदिति वाच्यम् ? अस्थिसन्धिभङ्गस्याशब्दार्थत्वात्, भगवद्भुजशैथिल्यप्रयुक्तभाराधिक्येन वक्रतापात्रस्य शब्दोपात्तस्य च क्लेशविशेषानाधायकत्वेनानिष्टव्यपदेशानर्हत्वात्, सुहृद्भूतानां गोपानामनिष्टप्राप्तौ हास्यानुपपत्तेश्च ; अतएव न सर्व्वाङ्गचूर्णीभावोपि गम्यः, गर्त्तप्रसक्त्यभावाच्च न तदापहारोपि, यतश्चिरकालशैलधारणजन्यश्रमपरिजिहीर्षया गोपानां प्रवृत्तिरिहावगम्यत—इति निरवद्यम् ॥

यथा वा—

लोके कलङ्कमपहातुमयं मृगाङ्को
जातो मुखं तव पुनस्तिलकच्छलेन।
तत्रापि कल्पयसि तन्वि! कलङ्करेखां
नार्यः समाश्रितजनं हि कलङ्कयन्ति॥

अत्रानिष्टपरिहाररूपेष्टानवाप्तिः॥

यथा वा—

शापोप्यदृष्टतनयाननपद्मशोभे!
सानुग्रहोभगवता मयि पातितोयम्।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं दहनः करोति॥

अत्र परानिष्टप्रापणरूपेष्टानवाप्तिः। स्वतोनिष्ट-

लोक इति, हे तन्वि! लोके प्रसिद्धं कलङ्कमपहन्तुं निवारयितुं मृगाङ्कस्तव मुखं जातः, तत्रापि पुनस्तिलकव्याजेन कलङ्करेखां त्वं कल्पयसि करोषि, हि यस्मान्नार्यः समाश्रितजनं स्वाश्रितजनं कलङ्किनं कुर्व्वन्तीत्यन्वयः॥ शापोपीति, मृगयायां प्रमादतोहतपुत्रेण तापसेन त्वमपि पुत्रशोकान्मरिष्यसीति शापे दत्ते तं प्रति दशरथस्येयमुक्तिः—अदृष्टपुत्रमुखपङ्कजशोभे मयि भगवता त्वया पातितः अयं शापोपि सानुग्रहो भवति खलु निश्चितम् इन्धनैरिद्धोदीप्तोदहनः कृषियोग्यां क्षितिं दहन्नपि बीजाङ्कुरजननीं करोतीति दृष्टान्तः। परेति, परस्य दशरथस्यानिष्टप्रापणरूपं यदिष्टं तस्यानवाप्तिरर्थात्तापसेत्यर्थः। कुतस्तत्राह—स्वत इति, नियोक्तुः प्रेषयितुः॥

स्यापि मुनिशापस्य महापुरुषार्थपुत्रलाभावश्यम्भाव-गर्भतया दशरथेनेष्टत्वेन समर्थितत्वात्। यत्र केनचित्-स्वेष्टसिद्ध्यर्थं नियुक्तेनान्येन नियोक्तुरिष्टमपेक्ष्य स्वस्यै-वेष्टं साध्यते तत्रापीष्टानवाप्तिरूपमेव विषमम्॥

यथा—

यं प्रति प्रेषिता दूती तस्मिन्नेव लयं गता।
सख्यः पश्यत मौढ्यं मे विपाकं वा विधेरमुम्॥

तस्मिन्नेव लयं गतेति नायके दूत्याः स्वाच्छन्द्यं दर्शितम्॥

यथा वा—

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः।
तत्तु तत्रैव रमते हताः पाणिनिना वयम्॥

एतानि सर्व्वथैवेष्टानवाप्तेरुदाहरणानि। कदाचिदि-ष्टावाप्तिपूर्वकं तदनवाप्तिर्यथा—मदीये वरदराजस्तवे,

भानुर्निशासु भवदङ्घ्रिमयूखशोभा
लोभात् प्रताप्य किरणोत्करमाप्रभातम्।

यं प्रतीति, मौढ्यं मूढत्वं एवम्विधायामासत्वबुद्धेः विधे-र्दैवस्य विपाकं परिपाकं फलमिति यावत्। भानुरिति, हे हरे! भानुः सूर्य्यः भवच्चरणकिरणशोभाया लोभात् स्वीयकिरणसमूहं निशासुप्रभातपर्य्यन्तं प्रताप्य रात्रौ सूर्य्यकिरणानामग्नौ प्रवेशात् तापयित्वा तत्र तस्मिन् किरणोत्करे हुतवहादग्नेः सकाशादुद्धृते सति रक्ततादर्शनात् मन्दसन्तापः सन् चणमात्रेण लुप्तरागे नष्टलौहित्ये सत्यनुदिनं तापं भजतीत्यन्वयः॥

तवोद्धृते ऊनतवशात् चरणानुरागे
तापं भजत्यनुदिनं स हि मन्दतापः ॥

यथा वा—

त्वद्वक्त्रसाम्यमयमम्बुजकोशमुद्रा-
भङ्गात्ततत्सुषममित्रकरोपलम्भाः ।
लब्ध्वापि पर्वणि विधुः क्रमहीयमानः
शंसत्यनीत्युपचितां श्रियमाशु नाशाम् ॥

अत्राद्यश्लोके सूर्य्यकिरणानां रात्रिष्वग्निप्रवेशन-मागमसिद्धं सूर्य्यस्य निजकिरणेषु भगवच्चरणारुणि-मप्रेप्सया तत्कृतं तेषामग्नौ प्रतापनं परिकल्प्य तेषा-

तद्वक्त्रेति, हे हरे! अयं विधुः पर्वणि पूर्णिमायां अम्बुजस्य कोशः कुड्मलः स एवाम्बुजभाण्डारगृहं तस्य मुद्रा मुकुलीभावो मुद्रणञ्च तस्य भङ्गेनात्ता गृहीता तत्सुषमा तच्छोभा यैस्तादृशा ये मित्रकराः सूर्य्यकिरणाः सुहृत्पाणयश्च तेषामुपलम्भालाभेन त्वद्वक्त्रस्य कान्तिं लब्ध्वापि क्रमेण हीयमानः क्षीयमाणः सन् अनीत्या उपचितां प्रवृद्धां श्रियं आशु नाशो यस्यास्तां शंसति कथयतीत्यन्वयः। अत्रेति, आगमसिद्धं तस्मादिवाग्निरादित्यं प्रविशति रात्रावादित्यस्तमिति श्रुतिसिद्धं प्रवेशनं, तत्कृतं सूर्य्यकृतं, तेषां किरणानामग्नौ प्रतापनरूपं परिकल्प्य उत्प्रेक्ष्य एवं तेषां किरणानामरुणिमानम् आरक्तत्वं च अरुणिमानु-वृत्तिरूपं परिकल्प्य इति दर्शितमित्यन्वयः। एवमग्रेपि सुहृ-

मृद्‌यकालदृश्यमरुणिमानञ्च तमोभूतनाराचाना-मिवाग्निसन्तापनप्रयुक्तारुणिमानुवृत्तिं परिकल्प्य सूर्य्यस्य महतापि प्रयत्नेन तात्कालिकेष्टावाप्तिरेव जायते न सार्वकालिकेष्टावाप्तिरिति दर्शितं, द्वितीय-श्लोके चन्द्रस्य भगवन्मुखलक्ष्मीं लिप्समानस्य सुहृ-त्वेन मित्रशब्दश्लेषवशात् सूर्य्यं परिकल्प्य तत्किरणस्य कमलमुकुलविकासनं चन्द्रानुप्रवेशनं च सुहृत्पाणे-र्भगवन्मुखलक्ष्मी-निधानकोशगृहमुद्रामोचन-पूर्वकं ततोगृहीतभगवन्मुखलक्ष्मीकस्य तया भगवन्मुख-लक्ष्म्या चन्द्रप्रसाधनार्थं चन्द्रस्पर्शरूपञ्च परिकल्प्यै-तावतापि प्रयत्नेन पौर्णमास्यामेव भगवन्मुखसाम्य-रूपेष्टप्राप्तिर्जायते न सार्वकालिकेति दर्शितं, क्वचिदि-ष्टानवाप्तावपि तदवाप्तिभ्रमनिबन्धनविच्छित्तिविशेषः।

यथा वा —

बल्लाल! क्षोणिपाल! त्वदहितनगरे सञ्चरन्ती किराती
रत्नान्यादाय कीर्णान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी।
क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्राधमन्ती
श्वासामोदप्रसक्तैर्मधुकरपटलैर्धूमशङ्कां करोति॥

त्वेन सूर्य्यं परिकल्प्य तत्किरणस्य चन्द्रानुप्रवेशं च शास्त्रसिद्धं, सुहृत्पाणेर्यथोक्तविशेषणविशिष्टस्य चन्द्रस्पर्शरूपस्य परिकल्प्य— इति दर्शितमित्यन्वयः॥ बल्लालेति, हे एतन्नाम भूपाल! त्वदहितनगरे सञ्चरन्ती भिल्ली प्रकीर्णानि रत्नान्यादाय उरुतरा महती

अत्र प्रभूताग्निसम्पादनोद्योगात्तत्सम्पादनालाभेऽपि तल्लाभः समोपन्यासमुखेन निबद्धः ॥ ३८ ॥

सम स्यादर्णनं यत्र द्वयोरप्यनुरूपयोः ।
स्वानुरूपं कृतं सद्म हारेण कुचमण्डलम् ॥
प्रथमविषमप्रतिद्वन्द्वीदं समम् ।

यथा वा—कौमुदीव तुहिनांशुमण्डनम् ॥

जाह्नवीव शशिखण्डमण्डनम् ।
यस्य कीर्तिरनुरूपमाश्रिता
त्वां विभाति नरसिंह ! भूपते ! ॥

या खदिराङ्गारस्य शङ्का भ्रान्तिस्तया व्याकुलाङ्गी तदुपरि श्रीखण्डं काष्ठशकलं चिप्त्वा मुकुलीभूतनेत्रा फूत्कारं कुर्वती सती श्वासपरिमलीन प्रसक्तैरामतैर्भ्रमरसमूहैर्धूमशङ्कां करोतीत्यन्वयः ॥ प्रभूतेति, बहुलेत्यर्थः। एतेषु च सर्वेषूत्पाद्योत्पादकभावरूपसम्बन्धगर्भेषु प्रभेदेषु कार्य्यकारणयोः क्वचिद्विलक्षणगुणशालित्वेनानुरूप्याभावात् क्वचिदिष्टोपादकत्वेनाभिमतस्य कारणस्येष्टानवाप्त्यनिष्टावाप्तिरूपकार्य्येणानुरूप्याभावात् सामान्यलक्षणसमन्वयो बोध्यः ॥

॥ इत्यलङ्कारचन्द्रिकायां विषमालङ्कारः ॥ ३८ ॥

सममिति, अनुरूपयोरित्यनन्तरं सम्बन्धस्येति शेषः; परस्परवर्णनं समं नामालङ्कारः। सद्म स्थानं, शशिखण्डमण्डनं चन्द्रकलाभूषणहरम् ॥

चित्रं चित्रं वत वत महच्चित्रमेतद्विचित्रम्
जातो दैवादुचितघटना संविधाता विधाता।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकला कोविदः काकलोकः॥

पूर्वं स्तुतिपर्य्यवसायि, इदं निन्दापर्य्यवसायीति भेदः।
सारूप्यमपि कार्य्यस्य कारणेन समं विदुः।
नीचप्रवणता लक्ष्मीर्जलजायास्तवोचिता॥
इदं द्वितीयविषमप्रतिद्वन्द्वि समम्। यथा वा—
दवदहनादुत्पन्नो धूमो घनतामवाप्य वर्षैस्तं।
यच्छमयति तदुचितं सोऽपि च दवमेव निर्दहति॥

यथा वा—

आदौ हालाहलकृतभुजा दत्तहस्तावलम्बो
बाल्ये शम्भोर्निटिलमहसा वह्निमैत्रीनिरूढः।

चित्रमिति, अत्र चित्रवतशब्दयोर्वीप्सा विस्मयातिशयद्योतनाय। परिणतं पक्वं स्फीतिः समृद्धिः एतस्याः फलसमूहैः कवलनकला भक्षणचातुर्यं तत्र कोविदः पण्डितः॥

सारूप्यमपीति, कार्य्यस्य कारणेन सारूप्यमपि समालङ्कारः। नीचेति, नीचप्रवणता नीचासक्तता जलजायाः समुद्ररूपजलाज्जातायाः, उचितेति, जलस्य तादृशत्वादिति भावः। दवेति, घनतां मेघरूपतां वर्षैर्जलवर्षणैः शमयति नाशयति हि यस्मात् सोऽपि दवदहनोऽपि दवमेव स्वोत्पादकं विनिर्दहति, तथा च कारणस्य स्वोत्पादकनाशकत्वात् कार्य्यस्यापि धूमस्य तथात्वमुचितमित्यर्थः॥ आदाविति, विरहिण्या इयमुक्तिः, सौम्यं

प्रौढोराहोरपि मुखविषेणान्तरङ्गीकृतोयः
सोऽयं चन्द्रस्तपति किरणैर्मामिति प्राप्तमेतत् ॥

पूर्वत्र कारणस्वभावानुरूप्यं कार्यस्यात्रागन्तुक-तदीयदुष्टसंसर्गानुरूप्यमिति भेदः।

विनानिष्टं च तत्सिद्धिर्यदर्थं कर्तुमुद्यतः।
युक्तोवारणलाभोऽयं स्यान्नतेवारणार्थिनः ॥

इदं सममनिष्टस्याप्यवाप्तिरित्यपिसंगृहीतस्य त्रिविधस्यापि विषमस्य प्रतिद्वन्द्वि, इष्टावाप्तिरनिष्टस्याप्रसङ्गाच्च अत्र गजार्थितया राजानमुपसर्पन्तं तद्दौवारिकैर्वार्यमाणं प्रति नर्मवचनमुदाहरणं। नचात्र निवारणमनिष्टमापन्नमित्युदाहरणत्वं शङ्कनीयं, राजद्वारि क्षणनिवारणं सम्भाविते श्लेषमहिम्ना

चन्द्रः मां किरणैस्तपतीत्येतत् प्राप्तं न्यायप्राप्तमित्यर्थः, स—कः? य आदौ हालाहलरूपेण हुतभुजाग्निना दत्तो हस्तावलम्बो-यस्य सः; निटिलं ललाटं, तत्सम्बन्धिमहसा नेत्राग्निना बन्धुया सख्यया मैत्रा निरूढः प्रसिद्धः; प्रौढो युवा राहोर्मुखसम्बन्धिभि-र्विषैरन्तरङ्गीकृतः ग्रहणकाले सम्पर्कातिशयादन्तरङ्गतां प्रापित इत्यर्थः। अत्र कार्यस्य तापस्य कारणीभूतचन्द्रगतदुष्ट-संसर्गानुरूपत्वं। भेदान्तरमाह—विनेति, अनिष्टं विना यमर्थं कर्तु-मुद्यतस्तत्सिद्धिरपि सममित्यनुवृत्त्या योजाम्। यदर्थमितिपाठे यस्यासावर्थस्येत्यर्थः। युक्त—इति, वारणं निवारणं वारणो-गजश्च युक्तोनस्यादपि तु स्यादेवेत्यर्थः। ग्रोभत इति क्वचित्पाठः साधुरेव। अपिसंगृहीतस्य=अपिशब्दसंगृहीतस्य, नर्मवचनं परिहासवचनं, अत्रेष्टावाप्तिः श्लेषकल्पिता बोध्या ॥

दृष्टार्थप्रतीतिः तत्रापि समालङ्कारोऽप्रतिहत एव।

उच्चैर्गजैरटनमर्थयमान एव

त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन्!।

उच्चाटनं त्वमपि लम्भयसे तदेव

मामद्य नैव विफला महतां हि सेवा॥

अत्र यद्यपि व्याजस्तुतौ स्तुत्या निन्दाभिव्यक्तिविवक्षायां विषमालङ्कारः,तथापि प्राथमिकस्तुतिरूपवाच्यविवक्षायां समालङ्कारो न निवार्यते;एवं यत्रेष्टार्थावाप्तिसत्वेपि श्लेषवशादसतोऽनिष्टार्थस्य प्रतीति स्तत्रापि समालङ्कारस्य न क्षतिः॥

इष्टार्थप्रतीतिरिति, इष्टार्थत्वेन प्रतीतिरित्यर्थः। अप्रतिहतइति, अनिष्टस्येष्टाभिन्नत्वेन ज्ञानकालेऽनिष्टत्वेनाप्रतिभासादिति भावः॥

उच्चैरिति, गजैरटनं तदारोहणपूर्व्वकं गमनं, इह त्वन्नगरे, उषितोस्मि वासं कृतवानस्मि। तदेव मत्प्रार्थ्यमानेव, उच्चाटनं दूरनिरसनमेव उच्चैर्गजैरटनं प्रतिमां लम्भयसे प्रापयसि हि यस्मात् महतां सेवा विफला न भवतीति मुखे स्तुतिः ततोदूरनिरसनरूपार्थान्तरपरिग्रहेण विषमालङ्कारस्फूर्त्या निन्दायां पर्य्यवसानं; एतेन वैषम्यस्य निन्दारूपस्य व्याजस्तुतिविषयत्वेन तयाऽपवाद—इति निरस्तं, विषमस्य निन्दामूलत्वेन तद्रूपत्वाभावादिति। इष्टार्थावाप्तिसत्वे पि=वास्तविकेष्टार्थप्राप्तिसत्वेऽपि। न क्षतिरिति, अनिष्टप्रतीतेराभासरूपत्वेनापर्य्यवसानादिति भावः॥

यथा वा—

शस्त्रं न खलु कर्तव्यमिति पित्रा नियोजितः।
तदेव शस्त्रं कृतवान् पितुराज्ञा न लङ्घिता॥

अत्र पितुराज्ञा न लङ्घितेत्यनेन विरोधालङ्काराभिव्यक्त्यर्थं न खल्वित्यत्र पदद्वयविभागात्मकरूपान्तरस्यापि विवक्षायाः सत्त्वेऽपि न खं लुनातीति न खल्वित्येकपदेन वस्तु सदर्थान्तरपररूपान्तरमादाय समालङ्कारोऽप्यस्त्येव, श्लेषलब्धासदिष्टावाप्तिप्रतीतिमात्रेणापि गतमुदाहरणम्।

यथा—

सत्यं तपः सुगत्यै यत्, तन्न्यम्बुषु रविप्रतीक्ष्यं सत्।
अनुभवति सुगतिमञ्जं, त्वत्पदजन्मनि समस्तकमनीयम्॥३९॥

शस्त्रमिति, तदेव नखल्वेव एकपदत्वेनेत्युपलक्षणे तृतीया, एकपदत्वोपलक्षितं यद्वस्तु सदर्थान्तरपररूपान्तरमित्यर्थः, अर्थान्तरस्य वास्तविकं पदव्युत्पत्तिकथनेन दर्शितमेव। श्लेषलब्धेति, श्लेषेण लब्धा असती वस्तुतोऽविद्यमाना या इष्टावाप्तिस्तत्प्रतीतिमात्रेण समालङ्कारोदाहरणमपि। गतम् अधिगतं, मात्रपदेनानिष्टावाप्तिप्रतीतिव्यवच्छेदः; युक्तोवारणलाभोयमित्यत्र किञ्चिदनिष्टस्य उच्चैरित्यत्रचोत्कटानिष्टस्य प्रतीतिसत्त्वादुदाहरणमाह—

यथेति, नायिकां प्रति नायकस्योक्तिः—हे तन्वि! तपः शोभन-

विचित्रं तत् प्रयत्नश्चेद्विपरीतः फलेच्छया।
नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिं॥

यथा वा—

मलिनयितुं खलवदनं विमलयति जगन्ति देव! कीर्त्तिस्ते।
मित्राह्लादकर्त्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥ ३९ ॥

अधिकं पृथुलाधारादाधेयाधिक्यवर्णनं।
ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः॥

अत्र यत्र महाजलौघेऽनन्तानि ब्रह्माण्डानि बुद्बुदकल्पानीत्याधारस्यातिविशालत्वं प्रदर्श्य तत्र न मान्तीत्याधेयानां गुणानामाधिक्यं वर्णितम्॥

गत्यैव भवतीति सत्यं, यद्यस्मादब्जं कमलं अम्बुषु जलेषु रविं प्रतीच्छते तादृशं सन्ततम् तपः कृत्वा त्वत्पदरूपे जन्मनि समस्तेभ्यः कमलेभ्यः कमनीयं सुन्दरं सत्सुगतिं शोभनाकृतिमनुभवतीत्यन्वयः। अत्र कमलस्योत्तमलोकरूपगतिप्राप्तये तपस्यतस्तल्लाभेऽपि शोभनगमनस्य गतिशब्दश्लेषबलादिष्टत्वेन प्रतीतेरिष्टावाप्तिप्रतीतिमात्रं न त्वनिष्टप्रतिभासोऽपीति॥

इत्यलङ्कारचन्द्रिकायां समालङ्कारः ॥३८॥

विचित्रमिति, फलेच्छया विपरीतः प्रयत्नश्चेद्विचित्रं नामालङ्कारः—इष्टविपरीताचरणमिति यावत्। नमन्तीति, नम्रीभवन्तीत्यर्थः। समुन्नतिं उच्चतां; मलिनयितुमिति,मलिनीकर्त्तुमित्यर्थः। विमलयति निर्म्मलीकरोतीति; जगन्ति त्रिभुवनानि; मित्रं सुहृत् मित्रः सूर्य्यश्च॥ ॥ इति विचित्रालङ्कारः ॥ ४० ॥

अधिकमिति, पृथुलादाधेयापेक्षया विशालादाधारादाधेयस्याधिक्यवर्णनमेकोऽधिकालङ्कारः। युगान्तेति,युगान्तकाले प्रलये

यथा वा—

युगान्तकालप्रतिसंहृतात्मनो-
जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः ॥

पृथ्व्याधेयाद्यदाधाराधिक्यं तदपि तन्मतम् ।
कियद्वाक् ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव ॥

अत्रैत—इति प्रत्यक्षदृष्टसर्वावैभवत्वेनोक्तानां गुणानां विश्राम्यत्तीसम्बाधावस्थानोक्त्याधारस्य वाग्ब्रह्मण आधिक्यं वर्णितम् ॥

यथा वा—

अहो विशालं भूपालभुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥

प्रतिसंहृतः स्वस्मिन् लयं प्रापित आत्मा स्वविलासरूपः प्रपञ्चोयेन तादृशस्य कैटभद्विषः श्रीकृष्णस्य यस्यां तनौ जगन्ति भुवनानि विकाशसहितं यथास्यात्तथा आसत स्थितानि तत्र तस्यां तनौ तपोधनस्य नारदस्याभ्यागमात्सम्भवोयासान्ता मुदः प्रीतयो न ममुरित्यन्वयः । पृथ्विति, विशालादाधेयाद्यदाधारस्याधिक्यं तदप्यधिकं । कियदिति, अपरिमितमित्यर्थः; वाक्शब्द एव ब्रह्म, इयञ्च परमेश्वरं प्रति भक्तस्योक्तिः; असम्बाधेति, असङ्कटे इत्यर्थः ॥

अहो इति, माति सम्माति, मातुमशक्यः अपरिमितः ॥

अत्र यद्यप्युदाहरणद्वयेपि कियद्वाग्ब्रह्मेति अहो विशालमितिचाधारयोः प्रशंसा क्रियते तथापि तनुत्वेन सिद्धवत्कृतयोः शब्दब्रह्मभुवनोदरयोर्गुणयशो-राश्यधिकरणत्वेनाधिकत्वं प्रकल्प्यैव प्रशंसा क्रियते —इति तत्प्रशंसा प्रस्तुतगुणयशोराशिप्रशंसायामेव पर्य्यवस्यति ॥ ४१ ॥

अल्पन्तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता।
मणिमालोर्मिका तेऽद्य करे जपवटीयते ॥ ४२

अत्र मणिमालामयोर्मिका तावदङ्गुलिमात्रपरि-मितत्वात् सूक्ष्मा सापि विरहिण्याः करे कङ्कणवत् प्रवेशिता तस्मिन् जपमालावल्लम्बत इत्युक्त्या ततोऽपि करस्य विरहकार्श्यादतिसौक्ष्म्यं दर्शितम् ॥

अत्रेति, भुवनत्रयोदरे। नन्वाधारयोः शब्दब्रह्मभुवनोदरयोरप्रस्तुतत्वेनाप्रशंसनीयत्वात्तदाधिक्यवर्णनमयुक्तमित्याशंक्याह—अत्रेति। न चात्राप्रस्तुतप्रशंसा शङ्कनीया प्रस्तुतस्याप्यभिधानादिति; इत्थं चाधाराधेयान्यतरस्य तनोरप्याधिक्यवर्णनमिति सामान्यलक्षणं बोध्यम्।

॥ इत्यधिकालङ्कारः ॥ ४१ ॥

अल्पमिति, यदिति, सामान्ये नपुंसकं। स्वापेक्षया सूक्ष्मादाधेयादाधारस्य सूक्ष्मता यत्तदल्पं नामालङ्कारः। मणीति, मणिपंक्तिरूपा ऊर्मिका अङ्गुलीयकं ते करे अद्य विरहावस्थायां जपमालायत इत्यर्थः। वटशब्दस्य गुटिकापर्यायत्वात् अति-

यथा वा—

यन्मध्यदेशादपि ते सूक्ष्मं लोलाक्षि दृश्यते ।
मृणालसूत्रमपि ते न सम्माति स्तनान्तरे ॥ ४२ ॥

अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् ।
त्रियामा शशिना भाति शशी भाति त्रियामया ॥ ४३

यथा वा—

यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः ।
तथा प्रपापालिकापि धारां वितनुते तनुम् ॥

अत्र प्रपापालिकायाः पथिकेन स्वासक्त्या पानीय-दानव्याजेन बहुकालं स्वमुखावलोकनमभिलषन्त्या-विरलाङ्गुलिकरणतश्चिरं पानीयदानानुवृत्तिसम्पादनेनोपकारः कृतः, तथा प्रपापालिकयापि पानीयपान-

सूक्ष्मता, आधेयभूतमानापेक्षयापि सूक्ष्मता । यदिति, हे चञ्चलाक्षि! तव मध्यभागादपि यत् सूक्ष्मं दृश्यते तत् मृणालसूत्रमपि तव स्तनयोरन्तरे मध्ये न भातीत्यन्वयः ॥ ॥ इत्यल्पालङ्कारः ॥ ४२ ॥

अन्योन्यमिति, यत्र परस्परमुपकारः स्यात्तत्रान्योन्यनामालङ्कारः । त्रियामा रात्रिः । यथेति, ऊर्ध्वाक्षः ऊर्ध्वनयनः प्रपापालिका प्रपादानाधिकृता काचिद्वनिता धारां जलधारां तनु सूक्ष्माम्; अत्रेति प्रपापालिकायाः पथिकेनोपकारः कृत इत्यन्वयः, स्वासक्त्येत्यादि प्रपापालिकाया विशेषणं, सम्पादनेन करणभूतेन एवं प्रपापालिकयापि पथिकस्योपकारः कृत इत्यन्वयः । यत्तु स्वमुखावलोकनमभिलषन्त्या इत्यत्र स्वमन्दस्य प्रपापालिका-

व्याजेन चिरं स्वमुखावलोकनमभिलषतः पथिकस्य धारातनूकरणतश्चिरं पानीयपानानुवृत्तिसम्पादनेनोपकारः कृतः, अत्रोभयोर्व्यापाराभ्यां स्वस्वोपकारसद्भावेऽपि परस्परोपकारोऽपि न निवार्य्यते॥ ४३॥

विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम्।
गतेपि सूर्य्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः॥ ४४

बोधकत्वमेव नाथ्यं न पाथबोधकत्वं यद्विशेषणघटकत्वेन स्वनिजादिशब्दा उपात्तास्तद्बोधका इति व्युत्पत्तिरिति केचिदुक्तं तदयुक्तं, मुख्यविशेष्यविशेषणघटकस्यैव स्वनिजादिशब्दस्य मुख्यविशेष्यमात्रगामित्वव्युत्पत्तेः; यथा देवदत्तस्य पुत्रः स्वमातृभक्त इत्यादौ स्वशब्दस्य तादृशपुत्रगामित्वं नतु गुणभूतदेवदत्तगामित्वम्। अतएवेदृशस्थलएव निजतनुस्वच्छलावण्यवापीसम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः इत्यत्रा- भवन्मतयोगस्य दूषणमुदाहृतं मम्मटभट्टैः काव्यप्रकाशिकायाम्। अन्यत्र तु न स्वविशेष्यगामित्वनियमः स्वाश्रितानां विप्राणामयं पालकः स्वाज्ञाकारिणां भृत्यानामयं कल्पवृक्ष इत्यादौ व्यभिचारात्। नचैव स्वदाररतानां विप्राणामहं भक्त इत्यत्र मदीयदाररतानामिति प्रतीतिः स्यादिति वाच्यं? तात्पर्य्यस्य नियामकत्वेनापत्त्यभावादिति॥ ॥ इत्यन्योन्यालङ्कारः॥ ४३॥

विशेष इति, ख्यातं प्रसिद्धं तदुक्तं विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिरिति। छिन्दन्ति नाशयन्ति, तत्कराः सूर्य्यकिरणाः। रात्रावादित्यरश्मी प्रविशन्तीति श्रवणाद्दीपस्थत्वम्। कमलमिति, अत्र कमलत्वादिना मुखादेरध्यवसानं बोध्यम्। कुवलये

यथा वा—

कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायां
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

अत्राद्ये सूर्यस्य प्रसिद्धाधारस्याभावेऽपि तत्कराणा-
मन्यत्रावस्थितिरुक्ता द्वितीये त्वम्भसः प्रसिद्धाधारस्या-
भावेऽपि कमलकुवलययोरन्यत्रावस्थितिरुक्ता; क्वचित्
प्रसिद्धाधाररहितानामाधारान्तरनिर्देशं विनैवा-
प्रलयमवस्थितेर्वर्णनं दृश्यते ॥

यथा—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥

अत्र कवीनामभावेऽपि तद्गिरामाधारान्तरनिर्देशं
विनैवाप्रलयमवस्थितिर्वर्णिता ॥

विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ।
अन्तर्बहिः पुरः पश्चात् सर्वदिक्ष्वपि सैव मे ॥

यथा वा—

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।
वत्स ! रामगतोऽसीति सन्तापेनानुमीयते ॥

नेत्रे, एतानि कमलकुवलयानि, कनकलताकृपायां कामिन्यां ।
सा च कनकलतिका च, निर्देशः कथनं, आप्रलयं प्रलय-
पर्य्यन्तं । दिवमिति, दिवमुपयातानामपि येषामनल्पगुणगण-
युक्ता गिरः । आकल्पं कल्पपर्य्यन्तं, जगन्ति भुवनानि । रम-
यन्तीत्यन्वयः, प्रभेदान्तरमाह —यदीति ।

किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः ।
त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ॥

यथा वा—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यं ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥

अत्राद्ये राजदर्शनारम्भेण कल्पवृक्षदर्शनरूपाऽशक्यवस्त्वन्तरकृतिः । द्वितीये राजसृष्ट्यारम्भेण मनोभवादिसृष्टिरूपा शक्यवस्त्वन्तरकृतिः ॥ ४४ ॥

स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत् ।
यैर्जगत् प्रीयते हन्ति तैरेव कुसुमायुधः ॥ ४५

यद्यत्साधनत्वेन लोकेऽवगतं तत् केनचित्तद्विरुद्धसाधनं क्रियेत चेत्—स व्याघातः ॥

तृतीयं प्रकारमाह,—किञ्चिदिति, किञ्चित्पदार्थारम्भेणाशक्यस्य वस्त्वन्तरस्य । कृतिः करणञ्च, सः विशेषः । त्वामिति, प्रभुं प्रति याचकोक्तिः । स्फुरदिति, उत्कटः प्रतापरूपोज्ज्वलनोऽग्निर्यस्येत्यर्थः उक्तविशेषणं त्वां सृजता विधिना भुवि नवो मनोभवादिः ससृजे सृष्ट इति सत्यमित्यन्वयः; अत्र चोक्तभेदत्रयान्यतमत्वं सामान्यलक्षणं बोध्यम् ॥

॥ इति विशेषालङ्कारः ॥ ४४ ॥

स्यादिति, तथाकारि तत्कार्य्यसाधनं वस्तु अन्यथाकारि तत्कार्य्यविरुद्धकार्य्यसाधनञ्चेत् क्रियेत । तदा व्याघातोऽलङ्कारः स्यादित्यर्थः । यैरिति, यैः कटाक्षविभ्रमादिभिर्जगत् प्रीयन्ते सन्तुष्यति तैरेव कुसुमायुधो हन्तीत्यन्वयः ॥ विरूपाक्षस्य हरस्य,

यद्वा यत्साधनतया केनचिदुपात्तं तदन्येन तत्प्रसिद्धं विना तद्विरुद्धसाधनं क्रियेत चेत्—सोऽपि व्याघातः; तत्राद्य उदाहृतः। द्वितीयो यथा—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्तास्तुवे वामलोचनाः॥
सौकर्य्येण निबद्धापि क्रियाकार्यविरोधिनी।
दया चेद्वाल इति मय्यपरित्याज्य एव ते॥

कार्य्यविशेषनिष्पादकतया केनचित् सम्भाव्यमानादर्थादन्येन कार्यविरोधिक्रियासौकर्येण समर्थ्यते चेत्—सोऽपि व्याघातः; कार्य्यविरोधिक्रियायां सौकर्यं कारणस्य सुतरां तदानुगुण्यम्।

यथा—जैत्रयात्रोन्मुखेन राज्ञा युवराजस्य राज्य एव स्थापने यत्कारणत्वेन सम्भावितम्बाल्यं तत् प्रत्युत तद्विरुद्धस्य सहनयनस्यैव कारणतया युवराजेन परित्यागस्यायुक्तत्वं दर्शयता समर्थ्यते।

जयिनीः विजयकारिणीः, स्तुवे स्तौमि। भेदान्तरमाह—सौकर्येणेति, कारणस्यानुगुण्याधिक्येनेत्यर्थः। निबद्धा कविवर्णिता कार्य्यविरोधिनी पराभिमतकार्य्यविरुद्धा। दयेति, दिग्विजयाय प्रस्थितं राजानं प्रति युवराजस्योक्तिः बाल इत्यतो मयि दया यौवराज्ये स्थापनरूपा चेत् तदा तस्मादेव हेतोरहं तवापरित्याज्य एव; किन्तु स्वेन सह नेतव्य इत्यर्थः। अर्थादिति,हेतौ पञ्चमी, अन्वयश्चास्य समर्थ्यते—इत्यनेन; अन्येन वक्त्रा। जैत्रेति,जयसाधनेत्यर्थः।

यथा वा—लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया।
दातापि विसृजत्यर्थं तयैव ननु शङ्कया॥

अत्र पूर्व्वोत्तरार्द्धे पक्षप्रतिपक्षरूपे कयोश्चिद्वचने इति लक्षणानुगतिः॥ ४५॥

गुम्फः कारणमाला स्याद् यथा प्राक् प्रान्तकारणैः।
नयेन श्रीः श्रियात्यागस्त्यागेन विपुलं यशः॥ ४६

उत्तरोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणभूतोत्तरोत्तरैर्व्वा वस्तुभिः कृतो गुम्फः कारणमाला आद्योदाहृता। द्वितीया यथा—

भवन्ति नरकाः पापात् पापं दारिद्र्यसम्भवम्।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत्॥४६॥

लुब्ध इति, तयैव शङ्कया दारिद्र्यशङ्कयैव; ननु निश्चितम् अत्र पूर्व्वार्द्धे लुब्धस्य दानाभावसाधकत्वाभिमतदारिद्र्यशङ्कारूपपूर्वपक्षनिरूपणं, दातुस्तु सैव विरुद्धदानसाधकत्वेन सम्मतेति पूर्व्वविरुद्धपक्षनिरूपणमुत्तरार्द्धे; यद्यपि दारिद्र्यस्य तात्कालिकत्वेन जन्मान्तरीयत्वेन च शङ्का भिन्ना तथाप्यभेदाध्यवसायान्न लक्षणसमन्वयः—इति बोध्यम्; सामान्यलक्षणं पूर्ववदन्यमतघटितमनुसन्धेयमिति दिक्॥ ॥ इति व्याघातालङ्कारः॥ ४५॥

गुम्फ—इति, रचनेत्यर्थः। कैस्तत्राह—यथेति, प्राक् च प्रान्तश्च प्राक् प्रान्ते ते अनति क्रम्येतियथा प्राक् प्रान्त यानि कारणानि तैः पूर्वं पूर्वं प्रति कारणैरुत्तरोत्तरं प्रति कारणैर्वेत्यर्थः। एवं चोत्तरोत्तरेत्यादिव्युत्क्रमेणाभिधान-मुदाहरण- क्रमानुरोधेनेति ज्ञेयम्॥ ॥ इति कारणमालालङ्कारः॥ ४६॥

गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता ।
नेत्रे कर्णान्तविश्रान्ते कर्णौ दोस्तम्भदोलितौ ॥४७
दोस्तम्भौ जानुपर्यन्त-प्रलम्बनमनोहरौ ।
जानुनी रत्नमुकुराकारे तस्य हि भूभुजः ॥

उत्तरोत्तरस्य पूर्वपूर्वविशेषणभावः, पूर्वपूर्वस्य उत्तरोत्तरविशेषणभावो वा गृहीत मुक्तरीति । तत्राद्यः प्रकार उदाहृतः ॥

द्वितीयो यथा—

दिक्कालात्मसमेव यस्य विभुना यस्तत्र विद्योतते
यत्रामुष्य सुधी भवन्ति किरणा राशेः स यासामभूत् ।
यस्तत्पित्तमुपःसूयोऽस्य हविषे यस्तस्य जीवातवे
वोढ़ा यद्गुणमेष मन्मथरिपोस्ताः पान्तु नो मूर्त्तयः॥४७॥

गृहीतेति, वक्ष्यमाणया गृहीतमुक्तरीत्या निबद्धार्थपंक्तिरेकावलिरलङ्कारः। नेत्र इति, तस्य भुज इति सर्व्वत्र सम्बध्यते दोस्तम्भयोर्भुजस्तम्भयोर्दोलितमान्दोलनं ययोस्तौ दोलनाविति पाठे दोला दोलनं ययोरस्तीति विग्रहः। रत्नमुकुरो रत्नदर्पणः। दिक्कालेति, दिक्कालात्मभिस्तुल्या यस्याकाशस्य विभुता, यश्च तत्राकाशे विशेषेण द्योतते सूर्य्यः, यत्र च चन्द्रे अमुष्य सूर्य्यस्य किरणा अमृतरूपा भवन्ति, स च चन्द्रो यासामपां राशेः समुद्रादभूत्, यस्मादग्निस्तासामपां पित्तं भवति, शुचिरप्पित्तमिति कोशात् यश्च यजमान उषस्तु प्रातः काले तु अस्य वह्नेर्हविषे हविर्दानाय भवति यश्च वायुः प्राणरूपस्तस्य यजमानस्य जीवातवे जीवनौषधाय भवति यस्याश्च पृथिव्या गुणं गन्धं एषा वायुर्वोढ़ा ता एता मन्मथरिपोर्हरस्याष्टौ मूर्त्तयो वो युष्मान् पान्त्वित्यन्वयः ॥

॥ इत्येकावली नामालङ्कारः ॥ ४७

दीपकैकावलीयोगान्मालादीपकमिष्यते ।
स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥

अत्र स्थितिरितिपदमेकं स्मरेण तस्या हृदये स्थितिः कृता हृदयेन त्वयि स्थितिः कृतेत्येवं वाक्यद्वयान्वयि अतो दीपकं गृहीतमुत्तरोत्तरसद्भावादेकावली चेति दीपकैकावलीयोगः ।

यथा वा—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयं ॥

अत्र येन येन सहसा यद्यत्समासादितमिति संक्षेपवाक्यस्थितमेकं समासादितपदं कोदण्डेन शरा-

मालादीपकमिति, मालादीपकं नामालङ्कारः ; एकमिति वाक्यद्वयान्वयीत्यनेनान्वितं । अत—इति, एतावन्मात्रेण दीपसादृश्याद्दीपकं न तु प्रागुक्तदीपकालङ्कारः, प्रकृताप्रकृतानां सादृश्यस्य गम्यत्वे तदङ्गीकारादितिभावः ॥ संग्रामेति, कोदण्डेन धनुषा ; शराः समासादिताः शरैः शत्रुमस्तकं समासादितं तेन शत्रुमस्तकेनापि भूमण्डलं तेन भूमण्डलेन त्वं पालकः समासादितः, भवता कीर्तिरासादिता कीर्त्या च लोकत्रयं समासादितमित्यनुषङ्गेनान्वयः ॥

॥ इति मालादीपकम् ॥ ४८ ॥

इत्यादिषु षट्स्वपि विवरणवाक्येषु तत्तदुचितलिङ्ग-वचनविपरिणामेनान्वेतीति दीपकं शरादीनामुत्त-रोत्तरविशेषणभावादेकावली चेति दीपकैकावली योगः ॥४२॥

उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते।
मधुरं मधु तस्माच्च सुधा तस्याः कवेर्वचः॥

यथा वा—

अन्तर्विष्णोस्त्रिलोकी निवसति फणिना-
मीश्वरे सोऽपि शेते
सिन्धोः सोप्येकदेशे तमपि चुलकयां-
कुम्भयोनिश्चकार।
भाते खद्योतलीलामयमपि नभसि
श्रीनृसिंहक्षितीन्द्र!
त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च
प्रेक्षणीयं विभाति॥

अयं श्लाघ्यगुणोत्कर्षः; अश्लाघ्यगुणोत्कर्षो यथा—

सार—इति, सारोनामालङ्कारः, तस्याः सुधातः, अन्तरिति विष्णोरन्तः उदरे, त्रयाणां लोकानां समाहारस्त्रिलोकी, सोऽपि विष्णुरपि फणिनां नागानामीश्वरे शेषे शेते निद्राति सोपि शेषोऽपि सिन्धोरेकदेशे तिष्ठतीति शेषः, तमपि सिन्धुमपि कुम्भ-योनिः अगस्त्यः चुलकयाञ्चकार पीतवान्, अयमगस्त्योऽपि

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः।
वायुना किन्न नीतोऽसौ मामयं प्रार्थयेदिति॥

उभयरूपो यथा—

गिरिर्महान् गिरेरब्धिर्महानब्धेर्नभो महत्।
नभसोऽपि महद्ब्रह्म ततोप्याशा गरीयसी॥

अत्र ब्रह्मपर्यन्तेषु महत्वं श्लाघ्यगुणः प्रकृतार्थत्वाशायामश्लाघ्यगुणः॥४९॥

यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः।
शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जय॥

यथा वा—

शरणं किं प्रपन्नानि विषवन्मारयन्ति वा।
न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत्॥

अमुं क्रमालङ्कार इति केचिद्व्याजह्रुः॥५०॥

नभसि गगने खद्योतशोभा धत्ते इदं गगनमपि प्रेक्षणीयं सुन्दरं, त्वत्कीर्त्तेः कर्णभूषणं नीलोत्पलं विभातीत्यन्वयः॥

तूलः कार्पासः प्रकृतार्थाशायां प्रकृतार्थरूपायामाशायां॥

॥ इति सारालङ्कारः॥ ४९॥

यथासङ्ख्यमिति, क्रमिकाणां क्रमेणोक्तानां पदार्थानां तेनैव क्रमेणान्वयोयथासङ्ख्यनामालङ्कारः। शरणमिति, कृपणेन धनानि यत् न त्यज्यन्ते तत्किं तानि शरणं प्रपन्नानि यच्च न भुज्यन्ते तत्किं विषवन्मारयन्तीति क्रमेणान्वयः। केचित् वामनादयः॥

॥ इति यथासङ्ख्यालङ्कारः॥ ५०॥

पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः।
पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा॥

अत्रैकस्य कामिनीवदनसादृश्यस्य क्रमेण पद्मचन्द्ररूपानेकाधारसंश्रयणं पर्यायः। यद्यपि पद्मसंश्रयणं कण्ठतो नोक्तं तथापि पद्मं मुक्त्वेति तत्परित्यागोक्त्या प्राक् तत्संश्रयाक्षेपेण पर्यायनिर्वाहः, अतएव—

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्।
धत्ते वक्षः कुचसचिवतामद्वितीयन्तु वक्त्रम्
त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेन॥

इत्यत्र पर्यायं काव्यप्रकाशकृदुदाजहार।
सर्वत्र शब्दाः पर्यायो यथा—

पर्याय इति, पर्यायेण क्रमेण अनेकसंश्रयः अनेकाश्रितत्वं, तदुक्तं—एवं क्रमेणानेकस्मिन् पर्याय इति॥ पद्ममिति, रात्रौ पद्मसङ्कोचात्त्यागः। अतएव त्यागेन पूर्वसंश्रयणाक्षेपादेव, श्रोणीति, जघनबन्धस्तनुतां कृशतां त्यजति मध्यभागस्तां सेवते आश्रयति, वक्षःस्थलं कुचसचिवतां कुचसहितत्वं धत्ते वक्त्रन्त्वद्वितीयं अत्र पूर्वं वक्षसोऽद्वितीयत्वावगमात् पर्यायसम्भवो ज्ञेयः, अद्वितीयत्वं द्वितीयरहितत्वमनुपमत्वञ्चैकत्वेनाध्यवसितं एवं चोदाहरणद्वयेऽपि पूर्वाधारसमाश्रयणं गम्यं उत्तराधारसमाश्रयणं शाब्दमिति सर्वत्र सर्वाधारसमाश्रयणाभ्ये।

नन्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ।

सर्वोऽप्ययं शुद्धपर्यायः ।

सङ्कोचपर्यायो यथा—

प्रायश्चरित्वा वसुधामशेषां
छायासु विश्रम्य ततस्तरूणां ।
प्रौढिं गते संप्रति तिग्मभानौ
शैत्यं शनैरन्तरपामयासीत् ॥

अत्र शैत्यस्योत्तरोत्तरमाधारसङ्कोचात्सङ्कोच-पर्यायः । विकासपर्यायो यथा—

बिम्बोष्ठ एव रागस्ते तन्वि ! पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि ! दृश्यते ॥

नन्विति, हे कालकूट ! उत्तरोत्तरविशिष्टमुत्कृष्टं पदं स्थानं यस्यां तादृशी इयमाश्रयस्थितिस्तव केनोपपदिष्टेत्यन्वयः । हृदये अभ्यन्तरे अवस इतिशेषः ; अथानन्तरं वृषलक्ष्मणो हरस्य कण्ठे अधुना पुनरितिसम्बन्धः शुद्धः सङ्कोचविकासाभ्यामिश्रितः ॥

प्राय इति; शैत्यं प्रायोऽशेषां वसुधां हेमन्ते चरित्वा ततो वसन्ते तरूणां छायासु विश्रम्य सम्प्रति ग्रीष्मे तिग्मभानौ सूर्ये प्रौढिं प्रागल्भ्यं प्राप्ते सति शनैरपां जलानामन्तरभ्यन्तरे अयासीत् गच्छति स्मेत्यर्थः ॥ बिम्बोष्ठएवेति, बिम्बफलसदृशे ओष्ठे

अत्र रागस्य पूर्वाधारापरित्यागेनाधारान्तरसङ्क्रमणमिति विकासपर्यायः।

एकस्मिन् यद्यनेकं वा पर्यायः सोऽपि सम्मतः।
अधुना पुलिनं तत्र यत्र स्रोतः पुराजनि॥

यथा वा—

पुराभूदस्माकं प्रथममविभिन्ना तनुरियं
ततोनु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
हतानां प्राणानां कुलिशकठिनानां फलमिदम्॥

रागोरक्तिमा अनुरागश्च एषः रागः, अत्र रागस्य भेदेप्यभेदेदाध्यवसायादेकत्वं; यत्तु एकसम्बन्धनाशोत्तरमपरसम्बन्धे सत्येव लोके पर्यायपदप्रयोगात् अोष्ठोबन्ध इति प्रकाशोदाहृते तथैव दृष्टत्वाच्च बिम्बोष्ठ एवेत्यत्र पर्यायकथनमयुक्तमिति केनचिदुक्तं—तत्प्रकाश एव बिम्बोष्ठ इत्युदाहरणे पर्यायसमर्थनात् भ्रान्तप्रलपनमिवोपेक्षणीयं, आलङ्कारिकपरिभाषितानां शब्दानां लोकव्यवहारविसम्वादस्याकिञ्चित्करत्वाच्चेति दिक्॥

भेदान्तरमाह—एकस्मिन्निति, पर्यायेणेत्यनुवर्तते, एकस्मिन्नाधारे क्रमेण यद्यनेकं भवति सोऽपि पर्यायालङ्कारः सम्मत इत्यर्थः॥

पुरेति, अस्माकमित्यस्मदोद्वयोश्चेति द्वयोरपि बहुवचनं; पुरेत्यनेन स्थूलोऽतीतकालउच्यते, तत्रापि प्रथमन्तनुरविभिन्नाऽभूत् ततोनु वितर्के त्वं प्रियतमः—वयं प्रियतमाः—इदानीन्तु

अत्र दम्पत्योः प्रथममभेदः ततः प्रेयसीप्रियतम-भावः, ततोभार्यापतिभावः—इत्याद्येपर्यायः ॥ ५१ ॥

परिवृत्तिर्विनिमयोन्यूनाभ्यधिकयोर्मिथः ।
जग्राहैकं शरं मुक्त्वा कटाक्षात्स रिपुश्रियं ॥

यथा वा—

तस्य च प्रवयसो जटायुषः
स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्ज्जरकलेवरव्ययात्
क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥ ५२ ॥

त्वं नाथः पतिः—वयं भार्याः—इतोऽपरं किमनिष्टमिति शेषः । कुलिशं वज्रं अत्र त्वं प्रेयानित्येकवचनेन एकरूपप्रेमपात्रत्वं व्यज्यते, प्रियतमा इत्यादिबहुवचनेनैकरूपताव्यतिरेक इति बोध्यम् ॥

इतिपर्यायोनामालङ्कारः ॥ ५१ ॥

परिवृत्तिरिति, न्यूनाधिकयोर्मिथः परस्परं विनिमयः परिवृत्तिरलङ्कारः । जग्राहेति, कटाक्षपूर्वकं एकं शरं मुक्त्वा रिपोः श्रियं जग्राहेत्यर्थः ॥

तस्यचेति, प्रवयसोऽतिवृद्धस्य जटायुषोगृध्रविशेषस्य स्वर्गं गतवतः किमिव शोचनीयं न किञ्चित् जर्जरं जीर्णतरं कलेवरं शरीरं तस्य व्ययोरावणेन सह युद्धे त्यागस्तस्मात्यशः क्रीतं शरीरं दत्वा यशोऽर्ज्जीतमित्यर्थः ॥

॥ इति परिवृत्त्यलङ्कारः ॥ ५२ ॥

परिसङ्ख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम् ।
स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् ॥
यथा वा—
विलङ्घयन्ति श्रुतिवर्त्म यस्यां लीलावतीनां नयनोत्पलानि ।
बिभर्ति यस्यामपि वक्रिमाणमेको महाकालजटार्धचन्द्रः ॥
आद्योदाहरणे निषेधः शाब्दः, द्वितीये त्वार्थः ॥५३॥
विरोधे तुल्यबलयोर्विकल्पालङ्कृतिर्मता ।
सद्यः शिरांसि चापान्वा नमयन्तु महीभुजः ॥
अत्र सन्धिविग्रहप्रमाणप्राप्तयोः शिरश्चापनमनयोर्युगपदुपस्थितयोर्युगपत्कर्तुमशक्ययोर्विकल्पः । यथा वा—
पतत्यविरतं वारि नृत्यन्ति च कलापिनः ।
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥
प्रियसमागमश्चेन्न मरणमाशंसनीयं—मरणे तु न प्रियसमागमसम्भव—इति तयोराशंसायां विकल्पः॥५४॥

परिसङ्ख्येति, एकं वस्तु प्रतिषिध्यापरस्मिन् वस्तुनोनियन्त्रणं नियमनं परिसङ्ख्यानामालङ्कारः । स्नेहेति, स्नेहस्तैलादिस्निग्धद्रव्यं अनुरागश्च, स्वान्तेषु चित्तेषु ; विलङ्घयन्तीति, यस्यामुज्जयिनीपुर्यां श्रुतिः कर्णः वेदश्च, वर्त्म मार्गं, वक्रिमाणं कौटिल्यं वक्राकारताञ्च, महाकालइति, तत्रैव ख्यातं शिवलिङ्गं ॥ इति परिसंख्यालङ्कारः ॥ ५३ ॥

सन्धिविग्रहप्रमाणेति, सन्धिविग्रहयोः कर्त्तव्यताबोधकप्रमाणेत्यर्थः ॥ इति विकल्पालङ्कारः ॥ ५४ ॥

बहूनां युगपद्भावभाजां गुम्फः समुच्चयः।
नश्यन्ति पश्चात् पश्यन्ति त्रस्यन्ति च भवद्द्विषः॥

अविरोधेन सम्भावितयौगपद्यानां नाशादीनां गुम्फनं समुच्चयः॥

यथा वा—

विभ्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवम्
शल्यं यद्विदधाति सा विधुरिता साधो! तदाकर्ण्यताम्।
शेते शुष्यति ताम्यति प्रलपति प्रम्लायति प्रेङ्खति
भ्राम्यत्युल्लुठति प्रणश्यति गलत्युन्मूर्च्छति त्रुट्यति॥

अत्र कासाञ्चित्क्रियाणां किञ्चित्कालभेदसम्भवेऽपि शतपत्रशतभेदन्यायेन यौगपद्यं विरहातिशयद्योतनार्थं विवक्षितमिति लक्षणानुगतिः।

बहूनामिति, युगपद्भावो भवनं तद्भाजां बहूनां गुम्फो निबन्धः वर्णनमिति यावत्, स समुच्चयालङ्कारः॥

विभ्राणेति, नायकं प्रति दूत्या इयमुक्तिः—हे साधो! त्वया हृदये विनिहितं प्रेमाभिधानं नवं शल्यं धारयन्ती विधुरिता विरहविह्वला सा नायिका यद्विदधाति तदाकर्ण्यतामित्यन्वयः। किं तदित्यपेक्षायामाह—शेते निद्राति, ताम्यति ग्लानिं माप्नोति, प्रकर्षेण म्लायति, प्रेङ्खति चलति, प्रणश्यति नैर्बल्यातिशयेन मृतप्राया भवति, गलति खेदातिशयात्, त्रुट्यति क्षीणा भवतीति।

कासाञ्चित् शयनभ्रमणादीनां शतपत्रस्य कमलस्य पत्रशतं दलशतं॥

अहम्प्राथमिकाभाजामेककार्य्यान्वयेऽपि सः।
कुलं रूपं वयोविद्या धनञ्च मदयन्त्यमुम्॥

यत्रैकः कार्य्यसिद्धिहेतुत्वेन प्रक्रान्तस्तत्रान्येऽपि यद्यहमहमिकया 'खले कपोत' न्यायेन तत्सिद्धिं कुर्व्वन्ति सोऽपि समुच्चयः; यथा मदे आभिजात्यमेकं समग्रं कारणं तादृगेव रूपादिकमपि तत्साधनत्वेनावतरतीति।

यथा वा—

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधि-
र्निरुत्सेकोलक्ष्म्यामनभिभवगन्धाः परकथाः।
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः
श्रुतेत्यन्तासक्तिः पुरुषमभिजातं कथयति॥ ५५॥

अहं प्राथमिकेति, अहं पूर्विकेत्यर्थः; अहं पूर्वमहं पूर्वमित्यहं पूर्विका स्त्रियामित्यमरः। एककार्य्यान्वये एककार्य्यसाधकत्वे स समुच्चयालङ्कारः। अहमहमिकया परस्पराहङ्कारेण आभिजात्यं कुलीनत्वं समग्रं पुष्कलं॥ प्रदानमिति, प्रच्छन्नं गुप्तं गृहं प्रत्युपगतेऽर्थादतिथौ लक्ष्म्यां सत्यां निरुत्सेकोगर्वाभावः, अभिभवोनिन्दा तद्गन्धशून्याः मौनं अनुद्घाटनं सदसि सभायां परेण कृताया उपकृतेः. कथनं श्रुते शास्त्रश्रवणे सर्वप्रथमासक्तानां पुरुषमभिजातं प्रथयतीत्यनेनान्वयः। अभिजातं कुलीनं, प्रथयति कथयति॥

॥ इति समुच्चयालङ्कारः ॥५५॥

क्रमिकैकगतानां तु गुम्फः कारकदीपकं ।
गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति ॥

यथा वा—

निद्राति स्नाति भुङ्क्ते चलति कचभरं शोषयत्यन्तरास्ते
दीव्यत्यक्षैर्नचायं गदितुमवसरोभूय आयाहि याहि ।
इत्युद्दण्डैः प्रभूणामसकृदधिकृतैर्वारितान्द्वारिदीना
नस्मान्पश्याब्धिकन्ये ! सरसिरुहरुचामन्तरङ्गैरपाङ्गैः॥

आद्योदाहरणे श्रुतस्य पान्थस्य कर्तृकारकस्यैकस्य गमनादिष्वन्वयः, द्वितीये तु अध्याहृतस्य प्रभुकर्तृकारकस्य निद्रादिष्वन्वय इत्येकवाक्यार्थान्वयेन दीपकच्छायापत्त्या कारकदीपकं प्रथमसमुच्चयप्रतिद्वन्द्वीदम् ॥ ५६ ॥

क्रमिकेति, क्रमिकाणामर्थात् क्रियाणामेककारकगतानां गुम्फोनिबन्धः कारकदीपकं नामालङ्कारः । तदुक्तं "सैव क्रियासु बह्वीषु कारकस्येति दीपकमिति सैव सकृद्वृत्तिः पश्यति सार्थं, पृच्छति मार्गं; निद्रातीति, हे अब्धिकन्ये ! प्रभूणामुद्यतदण्डैर्द्वारि अधिकृतैर्द्वारपालैरित्यसकृद्वारितानतएव दीनानस्मान् सरसिरुहद्युतीनां परमपरिचितैरपाङ्गैः कटाक्षैः पश्येत्यन्वयः, इति किं प्रभुर्निद्रातीत्यादि अन्तः अन्तःपुरे अक्षैः पाशैर्दीव्यति क्रीड़ति भूयः पुनः छाया सादृश्यं मुख्यदीपकस्य पूर्वोक्तप्रकारेण असम्भवादितिभावः । प्रतिद्वन्द्वी विपरीतम् ॥

॥ इति कारकदीपकालङ्कारः ॥ ५६ ॥

समाधिः कार्य्यसौकर्य्यं कारणान्तरसन्निधेः।
उत्कण्ठिता च तरुणी जगामास्तञ्च भानुमान्।
यथा वा—
मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः।
उपकाराय दिष्ट्येदं तदुदीर्णं घनगर्जितम्॥

केनचिदारोपितस्य कार्य्यस्य कारणान्तरसन्निधानाद्यत्सौकर्य्यं तत्सम्यगाधानात्समाधिः—द्वितीयसमुच्चयप्रतिद्वन्द्वी अयं समाधिः, तत्र बहूनां प्रत्येकसमर्थानां 'खले कपोतिका' न्यायेन युगपत् कार्य्यसाधनत्वेनावतारः। अत्र त्वेकेन कार्य्ये समारोपिते अन्यस्य 'काकतालीय' न्यायेनापतितस्य तत्सौकर्य्याधायकत्वमात्रं अत्रोदाहरणमुत्कण्ठितेति—उत्कण्ठैव प्रियाभिसरणे पुष्कलं कारणं नान्धकारागममपेक्षते "अत्यारूढा हि नारीणामकालज्ञो मनोभव" इति" न्यायात् दैवादापतितात्वन्धकारेण तत्सौकर्य्यमात्रं कृतमिति एवं द्वितीयोदाहरणेऽपि योज्यम्॥ ५७॥

समाधिरिति, कारणान्तरसन्निधेर्वशात् कार्य्यस्य सुकरत्वं समाधिरलङ्कारः। उत्कण्ठिता नायकसमीपं गन्तुं॥ मानमिति, मानन्निराकर्तुमस्याः पतिष्यतोममोपकाराय दिष्ट्या भाग्येनेदं घनगर्जितमुदीर्णमुन्नतमित्यन्वयः। समुच्चये कारणानान्तु पुष्कलत्वमिहतु तद्विपरीतमतुल्यकक्षत्वमितिप्रतिद्वन्द्वित्वं तत्रेत्यादिना-दर्शितम्॥

॥ इति समाध्यलङ्कारः॥ ५७॥

प्रत्यनीकम्बलवतः शत्रोःपक्षे पराक्रमः।
जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ॥

यथा वा—

मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति।
त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु
तां मदनः॥

एवं बलवति प्रतिपक्षे प्रतिकर्तुमशक्तस्य तदीय-
बाधनं प्रत्यनीकमिति स्थिते साक्षात्प्रतिपक्षे पराक्रमः
प्रत्यनीकमिति 'कैमुतिक' न्यायेन फलति।

यथा—

मधुव्रतौघः कुपितः स्वकीयमधुप्रपापङ्कनिमीलनेन।
बिम्बं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्केध्रुवमातनोति
॥ ५८॥

* प्रत्यनीकमिति, बलवतः शत्रोः पक्षे पक्षान्तःपातिनि तदीये
यः पराक्रमस्तत्प्रत्यनीकनामालङ्कारः। अनीकप्रतिनिधिरूप-
त्वात्। जैत्रेति, उत्पलाभ्यां स्वजयकारिनेत्रानुसारिणौ कर्णौ
अधःकृतौ तिरस्कृतौ अवतंसतया तदुपरि स्थितत्वादधस्तात्
कृतौ चेतिश्लेषः। ममेति, भुवि भूलोके मम रूपख्यातिं योऽहृत-
वान् तस्मिन्ननु प्रविष्टमनुरक्तं हृदयं यस्यास्तस्यानुप्रविष्टं हृदयं
यस्यां वा तादृगियमिति त्वयि मत्सरादिव खलु निश्चितं निर-
स्तदयोमदनस्तां क्षिणोति क्षीणां करोतीत्यन्वयः। अत्र मत्स-
रादिवेतिहेत्वंशे उत्प्रेक्षासत्वेऽपि तद्धेतुकप्रतिपक्षसम्बन्धिबाधनं

कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते।
स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम्? ॥

अत्र स इत्यनेन पद्मानि येन जितानीति विवक्षितं—तथा च सोऽपि येन जितस्तेन पद्मानि जितानीति—किमु वक्तव्यमिति 'दण्डापूपिका'न्यायेन सपद्मपस्यार्थस्य समिद्धिः—काव्यार्थापत्तिः। तान्त्रिकाभिमतार्थापत्तिव्यावर्त्तनाय काव्येति विशेषणम्।

प्रत्यनीकालङ्कारस्य विविक्तो विषय इति बोध्यं। अतएव मम्मटभट्टैरपि "त्वं विनिर्जितमनोभवरूपः सा च सुन्दरभवत्यनुरक्ता पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव काम" इत्युदाहृतं; एवं च हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलङ्कारान्तरं भवितुमर्हतीति कस्यचिद्वचनमनादेयं। कैमुतिकेति, तत् सम्बन्धिबाधनापेक्षया साक्षात्तद्बाधने विशेषादितिभावः। मध्विति, भ्रमरौघः स्वकीयमधुप्रपारूपस्य पद्मस्य निमीलनेन कुपितः सन् सुधांशोर्बिम्बलात्समाकृष्य तस्याङ्के मध्यभागे कलङ्कं ध्रुवमातनोतीत्यन्वयः ॥

॥ इति प्रत्यनीकालङ्कारः ॥५८ ॥

कैमुत्येनेति, कैमुत्यन्यायेनेत्यर्थः। काव्यऽलङ्काररूपार्थापत्तिः काव्यार्थापत्तिः। दण्डापूपिकेति दण्डाकर्षणे तदवलम्बिनाम पूपानामाकर्षणं यथार्थसिद्धं तद्वदित्यर्थः। व्यावर्तनायेति, लक्ष्यता वारणायेत्यर्थः अधरोयमिति, बन्धुजीवं बन्धूकपुष्पं तत्प्रभाहरः बन्धुभूतानां जीवानां प्रभाहरश्च। यत्वेतल्लक्षणमयुक्तं कैमुतिकन्यायस्य न्यूनार्थविषयत्वेनाधिकार्थापत्तावव्याप्तेः; यथा

यथा वा—

अधरोयमधीराक्ष्या बन्धुजीवप्रभाहरः।
अन्यजीवप्रभां हन्त हरतीति किमद्भुतम्!!॥
स्वकीयहृदयं भित्वा निर्गतौ यौ पयोधरौ।
हृदयस्यान्यदीयस्य भेदने का कृपा? तयोः॥५८॥

"तवाग्रे यदि दारिद्र्यं स्थितं भूप! द्विजन्मनां,शनैः सवितुरप्यग्रे तमः स्थास्यत्यसंशयं" अत्र शनैः शब्दमहिम्ना राजाग्रे दारिद्र्यास्थित्यपेक्षया सूर्याग्रे तमोवस्थानं दुःशकमेवेत्यवगतमपि न्यायसाम्यादापाद्यते—ननु कैमुतिकन्यायेनेति—केनचिदुक्तं, तत्रेदं वक्तव्यं—केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरर्थापत्तिरिति तदुक्तलक्षणमयुक्तं; का वार्ता सरसीरुहामित्यादिकैमुत्यन्यायविषयार्थापत्तावव्याप्तेः; कैमुतिकन्यायस्य न्यूनार्थविषयत्वेन तुल्यन्यायत्वाभावादापादनाप्रतीतेश्चेति। न चात्र कैमुत्य न्यायतामात्रं न त्वलङ्कारत्वमिति युक्तं? अलङ्कारतत्वाभियुक्तानांप्राचीनानां शून्यहृदयताया अपामरेण सम्भावयितुमशक्यत्वात्; लोकव्यवहारेऽपि कैमुत्यन्यायस्य चमत्कारित्वानुभवेन तेनैव न्यायेन तस्यालङ्कारतासिद्धेश्च। इत्थं च त्वदुक्तार्थापत्युदाहरणे वक्ष्यमाणः सम्भावनालङ्कारोयोऽन्यैर्यथार्थोक्तौ च कल्पनमिति यथार्थातिशयोक्तित्वेनोक्तः यथार्थातिशयोक्तावापाद्यापादकयोर्विपरीतार्थविश्रान्तत्वमिहत्वापादकस्य सिद्धत्वमापाद्यस्य सम्भाव्यमानत्वमिति वैचित्र्यान्तु तदवान्तरभेदताया: साधकं न तु तद्बहिर्भूततायाः इति न तत्राव्याप्तिशङ्कापीत्यलं विस्तरेण॥

॥ इति काव्यार्थापत्तिः॥ ५८॥

समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनं।

जितोऽसि मन्द कन्दर्प! मच्चित्तेऽस्ति त्रिलोचनः॥

अत्र कन्दर्पजयोपन्यासो दुष्करविषयत्वात्समर्थनसापेक्षः तस्य मच्चित्तेऽस्ति त्रिलोचन इति स्वान्तःकरणे शिवसन्निधानप्रदर्शनेन समर्थनं काव्यलिङ्गं—व्याप्ति-धर्मतामापेक्षनैय्यायिकलिङ्गव्यावर्तनाय काव्यविशेषणं इदं वाक्यार्थहेतुकं काव्यलिङ्गं पदार्थहेतुकम्।

यथा—

भस्मोद्धूलनभद्रमस्तु भवते रुद्राक्षमाले शुभम्
हा सोपानपरम्परे गिरिसुताकान्तालयालङ्कृते।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनी मोक्षनामनि महामोहे निलीयामहे॥

अत्र मोक्षस्य महामोहत्वमप्रसिद्धमिति तत्समर्थने लोकोच्छेदिनीति पदार्थो हेतुः क्वचित् पदार्थ-वाक्यार्थौ परस्परसापेक्षौ हेतुभावं भजतः।

समर्थनीयस्येति, समर्थनापेक्षस्यार्थस्यसमर्थनं काव्यलिङ्ग-मलङ्कारः। अर्थान्तरन्यासवारणाय—समर्थनापेक्षस्येति, यदा-त्वर्थान्तरन्यासप्रकरणे वक्ष्यमाणरीत्या सामान्यविशेषभावातिरि-क्तत्वं निवेश्यते, तदा नोपादेयमेवैतदितिबोध्यं। दुष्करविषय-त्वात् दुष्करविषयरूपत्वात्! समर्थनापेक्षस्य त्वनन्तरमर्थस्येति शेषः। नैय्यायिकेति, नैय्यायिकाभिमतलिङ्गस्य लक्ष्यतावारणा-येत्यर्थः।

भस्मोद्धूलनेति, सम्बोधनं शुभमस्त्वितिशेषः। गिरिसुताकान्त-

यथा वा—

चिकुरप्रकरा जयन्ति ते विदुषी मूर्द्धनि यान्बिभर्त्ति सा।
पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छतु चामरेण कः॥

अत्र चामरस्य दमयन्तीकुन्तलभारसाम्याभावे विदुषी मूर्द्धनि यान्बिभर्ति सति वाक्यार्थः पशुनाप्यपुरस्कृतेनेति पदार्थश्चेत्युभयं मिलितं हेतुः क्वचिदनेकपदार्थोऽनेकवाक्यार्थौ वा हेतुः।

यथा वा—

वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे! न क्वापि क्वचिदपि भवन्तः प्रणतवान्।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिभा-
निनीश! क्षन्तव्यं तदिदमपराधद्वयमपि॥

स्य शिवस्यालयः प्रासादस्तदलङ्कारभूते सोपानपङ्क्तौ इत्यपि सम्बोधनं हेति दैन्ये विभुना प्रभुणा शिवेन युष्माकं या सपर्य्या पूजा तत्सुखस्यालोकः प्रकाशस्तदुच्छेदकं निलीयामहे वयमित्यर्थात्।

चिकुरेति, चिकुरप्रकराः केशपाशाः विदुषी पण्डिता सा दमयन्ती अपुरस्कृतेन अनादृतेनपुरोभागे अनिहितेन च पदार्थः च अनेकपदार्थश्च। वपुरिति, पुरा पूर्व्वस्मिन् क्वापि जन्मनि क्वचिदपि पशौ भवन्तं न प्रणतवान् इतीदं वपुषः शरीरस्य प्रादुर्भावादनुमितं सम्प्रति नमन्नतिं कुर्व्वन्मुक्तः अतनुरशरीरः अहमग्रेऽप्यनतिमान्नतिरहितः समर्थनीयं हेतुकथनेनोपपादनीयं चमत्कारार्थत्वात् प्रस्पष्टहेतुकत्वात्।

अत्र तावदपराधद्वयं समर्थनीयं अस्पष्टार्थत्वात् तत् समर्थनं च पूर्वापरजन्मनोरनमनाभ्यां वाक्यार्थभूताभ्यां क्रियते । अत्र द्वितीयवाक्यार्थेऽतनुत्वमेकपदार्थो हेतुः अत्रापि सम्प्रति नयन्मुक्त इति वाक्यार्थोऽनेकपदार्थो वा हेतुः क्वचित्परस्परविरुद्धयोः समर्थनीययोरुभयोः क्रमादुभौ हेतुभावं भजतः ।

यथा—

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात्कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

अत्र शिवस्य युगपत्कृत्रिमब्रह्मचर्यवेषापनयनत्वरातदनुवर्तनेच्छयोर्विरुद्धयोः क्रमाद्गिरिजातीव्रतपसोऽसहिष्णुत्वं तत्संलापकौतुकस्तद्गुभावर्था हेतु-

अत्र अनयोर्वाक्यार्थयोर्मध्ये, द्वितीयवाक्यार्थे, अयेप्यनतिमानितिवाक्यार्थे, अत्रापि अतनुत्वेपि, नमन्मुक्त इत्यस्यावाक्यत्वादाह अनेकपदार्थोवेति, असोढेति, तपस्यन्तीमुमां प्रति बटुवेषेणागतस्य हरस्य वर्णनं; कपटेन योबटोर्ब्रह्मचारिणोवेषस्तस्यापनयने त्यागे-त्वराशैथिल्याभ्यां युगपदभियुक्त आक्रान्तः, त्वराशैथिल्यहेतुगर्भं क्रमेण विशेषणद्वयमाह—तत्काले उल्लसन् प्रादुर्भवन् सहभावो दुःसहत्वमर्थाच्छैथ्या यस्य तादृशस्य तपस असोढा सहनासमर्थः शैलकन्यायाः कथानां विस्रम्भेषु विश्वासेषु रसिकश्चेति ब्रह्मचर्यं ब्रह्मचारिवेषः ॥

त्वेन निबद्धौ, क्वचित्परस्परविरुद्धयोरुभयोः समर्थनीययोरेक एव हेतुः।

यथा—

जीयादम्बुधितनयाधररसमास्वादयन्मुरारिरयं।
अम्बुधिमथनक्लेशं कलयन् विफलञ्च सफलञ्च॥

अत्र विफलत्वसफलत्वकलनयोरुभयोर्विरुद्धयोरेक एवाम्बुधितनयाधररसास्वादो हेतुः—इदं काव्यलिङ्गहेत्वलङ्कार—इति केचिद्व्याजह्रुः। हे गोदावरि देवि! तावकतटोद्देशे कलिङ्गः कविर्वागदेवीं बहुदेशदर्शनसखीं त्यक्त्वा विरक्तिं गतः—एनामर्णवमध्यसुप्तसुरभिन्नाभिसरोजासनं ब्रह्माणं गमय, क्षितौ कथमसावेकाकिनी स्थास्यति? इत्यत्र ब्रह्मणः प्रापणं कथं गोदावर्या कर्तव्यमित्यसम्भावनीयार्थोपपादकस्यार्णवमध्येत्यादितद्विशेषणस्य न्यसनं श्लेषाख्यो गुण इति।

जीयादिति, अम्बुधेस्तनयायाः लक्ष्म्याः अधररसमास्वादयन्नयं मुरारिर्जीयात्सर्वोत्कर्षेण वर्त्तताम्; कीदृशः? समुद्रमथनक्लेशं एवंविधाङ्गनालाभात्सफलं कलयन् जानन्, एतदधरमाधुर्यं सत्यमृतस्य वैयर्थ्याद्विफलञ्च कलयन्नित्यर्थः। हे गोदावरीत्यत्रार्णवमध्येत्यादिविशेषणस्य न्यसनं श्लेषाख्योगुण इतिजयदेवेनोक्तमित्यन्वयः। तावकतटोद्देशे, त्वदीयतीरभूमौ कलिङ्गाख्यः कविः बहूनां देशानां दर्शने सहचारिणीं विरक्तिं मुक्तिं एनां सरस्वतीं ब्रह्माणं प्रति गमय मयेति सम्बन्धः; कीदृशं?- अर्णवमध्ये सुप्तोयो सुरभित्

श्लेषो विघटमानार्थघटकार्थस्य वर्णनमिति श्लेषलक्षणमिति च जयदेवेनोक्तं। वस्तुतस्त्वत्रापि पदार्थहेतुकं काव्यलिङ्गमेव तद्भेदकाभावात्। ननु साभिप्रायपदार्थविन्यसनरूपात्परिकरात् काव्यलिङ्गस्य किं भेदकं? उच्यते—परिकरे पदार्थबलात्प्रतीयमानार्थौ वाच्योपस्कारकतां भजतः, काव्यलिङ्गे तु पदार्थवाक्यार्थावेव हेतुभावं भजतः। ननु यद्यपि मुखावलोकाच्छेदिनीत्यादिपदार्थहेतुककाव्यलिङ्गोदाहरणे, अग्रे व्यनतिमानित्यादिवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे च पदार्थवाक्यार्थावेव हेतुभावं भजतस्तथापि पशुनाप्यपुरस्कृतेनेतिपदार्थहेतुकोदाहरणे 'मय्यस्तेऽस्ति त्रिलोचन' इति वाक्यार्थहेतुकोदाहरणे च प्रतीयमानार्थस्यापि हेतुकोटावनुप्रवेशो दृश्यते, पशुनेतिस्याविवेकित्वाभिप्रायगर्भम्, विदुषीत्यस्य प्रतिनिर्देश्यत्वात् त्रिलोचन इति च कन्दर्पदाहकतृतीयलोचनत्वाभि-

मुरारिस्तन्नाभिकमलस्य; श्लेषोऽविघटमानेत्यत्राकारप्रश्लेषः, अविघटमानस्यानुपपद्यमानस्यार्थस्य घटक उपपादको योऽर्थस्तस्य वर्णनं श्लेषाख्यो गुण इत्यर्थः। पदार्थहेतुकं समस्तपदार्थहेतुकं पदार्थवाक्यार्थेति द्वंद्वः प्रतीयमानोऽर्थः व्यङ्ग्योऽर्थः।

प्रतिनिर्देश्यत्वादिति, निर्दिश्यते उच्चार्यते इति निर्देशः शब्दः तेन विपरीतार्थकशब्दत्वादित्यर्थः; तस्य दाहकतृतीयलोचनत्वस्य; तथाचोभयत्र परिकरालङ्कारसत्त्वात्काव्यलिङ्गोदाहरण-

प्रायगर्भ—कन्दर्पजयोपयोगित्वात्तस्य-सत्यं,तथापि न तयोः परिकर एव किन्तु तदुत्थापितं काव्यलिङ्गमपि प्रतीयमानाविवेकविशिष्टेन पशुनाप्यपरस्य,तत्वस्या-नेकपदार्थस्य प्रतीयमानकन्दर्पदाहकतृतीयलोचनवि-शिष्टस्य शिवस्य चित्ते सन्निधानस्य च वाक्या-र्थस्य वाच्यस्यैव हेतुभावात्—न हि तयोर्वाच्ययोर्हेतु-भावे ताभ्यां प्रतीयमानं मध्ये किञ्चिद्द्वारमस्ति—यथा सर्वाशुचिनिधानस्येत्यादिपदार्थपरिकरोदाहरणे सर्वा-शुचिनिधानस्येत्यादिनानेकपदार्थेन प्रतीयमानं शरी-रस्यासंरक्षणीयत्वम्। तथाच वाक्यार्थपरिकरोदाह-रणं पर्यायोक्तविधया तत्तद्वाक्यार्थेन प्रतीयमानं नाहं व्याध—इत्यादि। तस्मात्पशुनेत्यत्र त्रिलोचन इत्यत्रच प्रतीयमानं वाच्यस्यैव पदार्थस्य वाक्यार्थस्य च हेतुभावोपपादकतया काव्यलिङ्गस्याङ्गमेव—यथा

त्वमनुपपन्नमितिभावः। तयोः पशुनेत्याद्युक्तोदाहरणयोः ; तदुत्था-पितं परिकरोपपादितं; व्यङ्गस्य हेतुकोटावेवानुप्रवेशादितिभावः एतदेव विवृणोति—प्रतीयमानेति, वाच्यस्यैवेत्येवकारसूचित-व्यङ्ग्यद्वारकत्वं न हीत्यादिना विवृतं,तदयमर्थः—यदि पश्वादि-पदव्यङ्ग्यं वेशपाशसाम्याभावादेरर्थस्य साक्षादुपपादकं स्यात्त-दात्रपरिकर एव स्यान्न काव्यलिङ्गं—न त्वेवमस्ति,पशुपदप्रतीता-विवेकित्वमात्रेण साम्याभावस्योपपादनासम्भवात् किन्तु तद्वि-शिष्टपशुपुरस्कृतत्वाभाव एव साक्षादुपपादक इति हेतुकोटि-

—"यत्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरम्"
इत्यनेकवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे त्वन्नेत्र-
समानकान्तीत्यादिकानि इन्दीवरादिविशेषणानि
तेषां वाक्यार्थानां हेतुभावोपपादकानीति तत्र वाक्या-
र्थहेतुककाव्यलिङ्गे पदार्थहेतुककाव्यलिङ्गमङ्गमिति
न तयोः काव्यलिङ्गोदाहरणत्वे काचिदनुपपत्तिः ॥९०॥

निविष्टं व्यङ्ग्यं काव्यलिङ्गरूपस्य तस्याङ्गमेव,व्यङ्ग्यान्तरन्तु नोक्त-
काव्यलिङ्गगम्यमर्थोपपादकमस्तीति निराबाधमेव काव्यलिङ्ग-
मिति। ननु स्वयमन्योपपादकस्य काव्यलिङ्गस्याप्युपपादकं
क्व दृष्टमित्याशङ्क्योदाहरति—यत्त्वन्नेत्रेति, एतत्प्रतीपालङ्कारे
प्रागुदाहृतं। अनेकवाक्यार्थहेतुकेति, पूर्वपादत्रयवाक्यार्थत्रयस्य
चतुर्थपादार्थहेतुत्वमिति ज्ञेयं। हेतुभावोपपादकानीति, इन्दी-
वरस्य नेत्रसमानकान्तित्वं विना पटादेरिव तद्दर्शनस्य दैव-
गतकान्तासादृश्यविनोदासहिष्णुत्वे हेतुत्वासम्भवादिति भावः।
समाहितमर्थमुपसंहरति— इतीति, तयोः पद्मनापीति मच्चित्तेऽ-
स्तीत्येतयोः॥

॥ इति काव्यलिङ्गालङ्कारः ॥९०॥

उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः ।
हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥
गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेन सूत्रं शिरसि धार्यते ॥

सामान्यविशेषयोर्द्वयोरप्युक्तिरर्थान्तरन्यासस्तयोश्चैकं प्रस्तुतं अन्यदप्रस्तुतं भवति, ततश्च विशेषे प्रस्तुते तेन सहाप्रस्तुतसामान्यरूपस्य सामान्ये प्रस्तुते तेन सहाप्रस्तुतविशेषरूपस्यार्थान्तरस्य न्यसनमर्थान्तरन्यास इत्युक्तं भवति—तत्राद्यस्य द्वितीयार्द्धमुदाहरणं, द्वितीयस्य द्वितीयश्लोकः। नन्वयं काव्यलिङ्गान्नातिरिच्यते? तथाहि—उदाहरणद्वयेऽप्यप्रस्तुतयोः सामान्यविशेषयोरुक्तिः प्रस्तुतयोर्विशेषसामान्ययोः कथमुपकरोतीति विवेक्तव्यं—न हि सर्वथैव प्रस्तुताभिधानं युज्यते—न तावदप्रस्तुतप्रशंसायामिव प्रस्तुतव्यञ्जकतया प्रस्तुतयोरविशेषसामान्ययोः स्वशब्दोपात्तत्वान्नाप्यनुमालङ्कार इव प्रस्तुतप्रतीतिजनकतया, तद्वद्दिह व्याप्तिपक्षधर्मताद्यभावात् नापि दृष्टान्तालङ्कार इव उपमानतया "विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकारः नवतरुभंगध्वनिरिव हरिनिद्रातस्करः

प्रस्तुतव्यञ्जकतयेति, अप्रस्तुताभिधानं युज्यत इत्यनुषज्यते, एवमग्रेऽपि । विस्रब्धेति, खलस्य विश्रब्धघातरूपो दोषः स्वस्यैव बधाय भवति यतो वीराणां कोपकारकः सिंहनिद्रापहारी नव-

करिणः' इत्यादिषु सामान्ये विशेषस्योपमानत्वदर्शने-ऽपि विशेषे सामान्यस्य क्वचिदपि तददर्शनात् उपमानतया तदन्वये सामञ्जस्याप्रतीतेश्च, तस्मात्प्रस्तुतसमर्थकतयैवाप्रस्तुतस्योपयोग इहापि वक्तव्यः; ततश्च वाक्यार्थहेतुकं काव्यलिङ्गमेवात्रापि स्यान्नत्वलङ्कारान्तरस्यावकाश इति चेत्? अत्र केचित्—समर्थनसापेक्षस्यार्थस्य समर्थने काव्यलिङ्गनिरपेक्षस्यापि प्रतीतिवैभवात्समर्थनेऽर्थान्तरन्यासः न हि यत्वन्नेचसमानकालीत्यादिकाव्यलिङ्गोदाहरणेष्विव—

'अथोपगूढे शरदा शशाङ्के
प्रावृड् ययौ शान्ततडित्कटाक्षा।

तरुभङ्गजन्यध्वनिः करिणोवधाय यथेत्यर्थः। तददर्शनात् उपमानत्वादर्शनात्। ननु महापुरुषाकृतिरिव गम्भीरेयमस्याकृतिरित्यादौ सामान्यस्याप्युपमानता दृष्टेत्यरुचेराह—उपमानतेति, इवाद्यभावात्तात्पर्याभावाच्च उपमानतयाऽन्वयस्य सामञ्जस्येनाप्रतीतेरित्यर्थः; इहापीत्यपिना काव्यलिङ्गसमुच्चयः। प्रतीतिवैभवात्, प्रतीतिशालिरूपप्रयोजनवशात्, प्रयोजनस्यापि हेतुत्वविवक्षया पञ्चमी, उक्तैकवाक्यमुदाहरणनिष्ठतया दर्शयति—महीत्यादिना, इत्यादिकाव्यलिङ्गोदाहरणेष्विव अर्थेत्याद्यर्थान्तरन्यासोदाहरणेषु प्रस्तुतस्य समर्थनार्थित्वं नास्तीति सम्बन्धः॥ शरदा शशाङ्के उपगूढे आलिङ्गिते सति यथानन्तरं शान्तास्तडिद्रूपाः कटाक्षा यस्याः सा प्रावृट् ययौ गतवती, उक्तं

कासां न सौभाग्यगुणोऽङ्गनानां
नष्टः परिभ्रष्टपयोधराणाम् ॥
दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारं।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसामतीव" ॥

इत्याद्यर्थान्तरन्यासोदाहरणेषु प्रस्तुतस्य समर्थनापेक्षत्वमस्तीति। वस्तुतस्तु प्रायोवादोऽयं—अर्थान्तरन्यासेऽपि हि विशेषस्य सामान्येन समर्थनानपेक्षत्वेऽपि सामान्यं विशेषेणसमर्थनमपेक्षत एव निर्विशेषं न सामान्यमिति न्यायेन बहूनामप्यसाराणां कार्यसाधक इत्यादि सामान्यस्य 'तृणैरारभ्यते रज्जुस्तया नागोऽपि बध्यत'—इत्यादिसम्प्रतिपन्नविशेषावतरणं विना बुद्धौ प्रतिष्ठितत्वासम्भवात्।

विशेषरूपमर्थं सामान्यरूपेणार्थान्तरेण समर्थयति—परिभ्रष्टपयोधराणां कासामङ्गनानां सौभाग्यगुणो न नष्ट इति। पयोधराः कुचामेघाश्च ॥

दिवाकरादिति, कुमारसम्भवे हिमालयवर्णनं—योहिमालयः ममत्वं मदीयता बुद्धिः शिरोमस्तकं शिखरञ्च समर्थनाथित्वं समर्थनापेक्षत्वं अयं अर्थान्तरन्यासे समर्थनामपेक्षत्वरूपः सामान्यस्येत्यत्र बुद्धौ प्रतिष्ठितत्वासम्भवादित्यनेनान्वयः।

सम्प्रतिपन्नेति, वक्तृश्रोतृसम्मतेत्यर्थः; विशेषावतरणं विशेषाव-

न च तत्र सामान्यस्य काषाम सौभाग्यगुणो-कृनानामित्यादिविशेषसमर्थसामान्यस्येव लोक-सम्प्रतिपन्नतया विशेषावतरणं विनैव कुत्रौ प्रतिष्ठितत्वं सम्भवतीति श्लोके तन्न्यासनं मापेक्षितमस्तीति वाच्यं ? —सामान्यस्य सर्वत्र लोकसम्प्रतिपन्नत्वनियमाभावात् —न हि योयोधूमवान् सोऽग्निमानितिव्याप्तिरूप-सामान्यस्य लोकसम्प्रतिपन्नतया—यथा महानस इति तद्विशेषरूपदृष्टान्तानुपादानसम्भवमात्रेणाप्रसिद्धव्याप्ति-रूपसामान्योपन्यासेऽपि तद्विशेषरूपदृष्टान्तोपन्यास-नैरपेक्ष्यं सम्भवति। नन्वेवं सामान्येन विशेषसमर्थन-स्थलेऽपि क्वचित्तस्य सामान्यस्य लोकप्रसिद्धत्वाभावेन तस्य बुद्धावारोहाय पुनर्विशेषान्तरस्य न्यासप्रसङ्ग इति वाच्यं ?—इष्टापत्तेः—अत्रैव विषये विकस्वरा-लङ्कारस्यानुपदमेव दर्शयिष्यमाणत्वात्।

किञ्च काव्यलिङ्गेऽपि न सर्वत्र समर्थनसापेक्षत्व-नियमः—चिकुरप्रकरा जयन्ति इत्यत्र तदभावादुप-

गमं, तत्र बहूनामित्यादौ सामान्यस्येतिविशेषावतरणं विनैव कुत्रौ प्रतिष्ठितत्वं सम्भवतीत्यभिमेयान्वितं; तन्न्यासनं कर्मेरि-त्यादि विशेषन्यसनम् ॥

नन्वेवमर्थान्तरन्यासे क्वचिदेव समर्थनापेक्षा, काव्यलिङ्गे तु सर्वत्र सैवास्तु भेद—इत्याशङ्क्याह—किञ्चेति, क्वचित्तदनुपपत्तेन कविसमूहाभ्यस्तत्वेन तदासदायां तदनुवदते पदं हि पूर्व-

मानवस्तुषु वर्णनीयत्वाभावेन निन्दायाः कवि-कुलचुम्बित्वेनात्र समर्थनापेक्षाविरहात्—न हि तदा-स्पदास्येऽपि गतोऽधिकारिता।

‘न शारदः पार्श्वगतः शर्वरीश्वर’—इत्यादिषु सम-र्थनं दृश्यते

न विषेण न शस्त्रेण नाग्निना न च मृत्युना।
अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः॥

इत्यादिकाव्यलिङ्गविषयेषु समर्थनापेक्षाविरहेऽपि अप्रतीकारपारुष्या इत्यादिना समर्थनदर्शनाच्च—न हि तत्र स्त्रीणां विषादिनिर्मितत्वाभावप्रतिपादनं समर्थनं सापेक्षप्रसिद्धत्वात्, तस्मादुभयतोव्यभिचारात् समर्थनापेक्षसमर्थने काव्यलिङ्गं, तन्निरपेक्षसमर्थनेऽर्थान्तरन्यास इति न विभागः किन्तु समर्थ्यसमर्थकयोः सामान्यविशेषसम्बन्धेऽर्थान्तरन्यासस्तदितरसम्बन्धे काव्यलिङ्गमित्येव व्यवस्थावधारणीया— प्रपञ्चश्चित्रमीमांसायां द्रष्टव्यः। एवमप्रकृतेन प्रकृतसमर्थनमुदाहृतं, प्रकृतेनाप्रकृतसमर्थनं यथा—

शरद्भवः पार्वणः शर्वरीश्वरश्चन्द्रः। न विषेणेत्यादेः स्त्रियः कृता इत्यनेनान्वयः अपितु स्त्रीभिरेव यतः प्रतीकाररहितं पारुष्यं क्रौर्यं यासां तथाभूताः। उभयतः, अन्वयव्यतिरेकाभ्यां समर्थनापेक्षायामपि 'तदास्पदास्येऽपीत्यादौ तदभावात्—न विषेणेत्यादावपेक्षाविरहेऽपि समर्थनसत्त्वात्। अप्रकृतेनेति, पार्श्वे

यदुच्यते पार्वति! पापवृत्तये
न रूपमित्यव्यभिचारि तद्वचः।
तथा हि ते शीलमुदारदर्शने
तपस्विनामप्युपदेशतां गतम्॥ यथा वा—
दानं ददत्यपि जलैः सहसाधिरूढे
को विद्यमानगतिरासितुमुत्सहेत?।
यद्दन्तिनः कटकटाहतटान्मिमङ्क्षो-
र्मङ्क्षूदपाति परितः पटलैरलीनाम्॥६१॥

महात्मनां सर्व्वसुकरत्वेनाप्रकृतेन सामान्येन हनूमदब्धितरणस्य प्रकृतविशेषस्य समर्थनं, द्वितीये पुष्पमालासूत्रवृत्तान्तेनाप्रकृतेन विशेषरूपेण प्रकृतस्य गुणवत्सङ्गप्रयुक्तपूज्यत्वस्य सामान्यरूपस्य समर्थनमित्यर्थः।

यदुच्यत इति, हे पार्वति! रूपं आकृतिसौन्दर्यं पापवृत्तये दुष्टाचरणाय न भवति, यत्राकृतिस्तत्र गुणा वसन्तीति न्यायादिति यदुच्यते तद्वचनमव्यभिचारि यथार्थम् तथाहि—उदारं रमणीयं दर्शनं यस्यास्तथाभूते पार्वति! तव शील आचरणं तपस्विनामप्युपदेशरूपतां प्राप्तमिति प्रकृतेन विशेषेणाप्रकृतस्य सामान्यस्य समर्थनम्।

दानमिति, दानं वितरणं मदजलञ्च जलैरुदकैः जडैश्च—डलयोरभेदात्; अधिरूढे आक्रान्ते सति विद्यमानगतिः सगतिकः बुद्धिमांश्च कः आसितुं स्थातुं उत्सहेत प्रभुयात् यस्मात् मिमङ्क्षोर्मज्जनं कर्तुमिच्छोर्दन्तिनो गजस्य कटो गण्ड एव कटाहस्तस्य तटादग्रादलीनां पटलैः समूहैः परितो मङ्क्षु शीघ्रं उदपाति उत्पतितमित्यन्वयः। अत्रापि पूर्वार्द्धोक्तमप्रकृतसामान्यमुत्तरार्द्धोक्तेन प्रकृतेन विशेषेण समर्थितम्॥

॥ इत्यर्थान्तरन्यासालङ्कारः ॥६१॥

यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः।
स न जिग्ये महान्तो हि दुर्द्धर्षाः सागरा इव॥

यत्र कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावप्यपरितुष्यता कविना तत्समर्थनाय पुनर्विशेषान्तरमुपमानरीत्यार्थान्तरन्यासविधया वा विन्यस्यते तत्र विकस्वरालङ्कारः, उत्तरार्द्धं यथाकथञ्चिदुदाहरणम् इदन्तु व्यक्तमुदाहरणम्—

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः॥

इदमुपदानरीत्याविशेषान्तरस्य न्यसने उदाहरणम्॥
अर्थान्तरन्यासविधया यथा—

यस्मिन्निति, यस्मिन् काव्ये इत्यर्थात् निबध्यत—इति शेषः। समर्थ्यसमर्थकभावापन्नत्वं तु न लक्षणे निवेशनीयं—तद्विना चमत्काराभावेन चमत्कारित्वविशेषणमवश्यवक्तव्येनैवानतिप्रसङ्गात्; एवमेवार्थान्तरन्यासलक्षणेऽपि बोध्यं॥ स नेति, स प्रकृतोराजा न जिग्ये न जितोऽर्थात्परैरिति शेषः। प्रकृतः तत्समर्थनं महान्तो हि दुर्धर्षा अनाक्रमणीया इति सामान्येन तस्यापि सागरा इवेति विशेषोपमयेति ज्ञेयं॥

प्रसिद्धेरश्लत्वात्सत्त्वापरितोषो बोध्यः। यथाकथञ्चिदिति, महतामनाक्रमणीयत्वस्यातिप्रसिद्धत्वेन तत्समर्थनापेक्षाभावाच्चन्द्रालोकगतमेतन्नसमञ्जसमितिभावः। इदं वक्ष्यमाणं; व्यक्तमिति, गुणसमुदाये एकस्य दोषस्यानाक्रमणमनतिप्रसिद्धतया समर्थना-

कर्णारुन्तुदमन्तरेण रणितं गाहस्व काक ! स्वयं
माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम् ।
धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालभालपतिते पङ्के न शङ्केत कः ॥
मालिन्यमब्जशशिनोर्मधुलिट्कलङ्कौ
धत्तो मुखे तु तव दृक् तिलकाञ्जनाभा ।
दोषावितः क्व च न मेलनतो गुणत्वं
वक्तुर्गुणौ हि वचसि भ्रमविप्रलम्भौ ॥६२॥

पेयमिन्दोरित्यादिविशेषेण समर्थित इत्यतः स्फुटमित्यर्थः। कर्णेति, हे काक ! कर्णयोररुन्तुदं पीडाजनकं रणितं शब्दितं अन्तरेण विना स्वयं मकरन्दः पुष्परसस्तच्छालिनं माकन्दमाम्रवृक्षं गाहस्व आश्रय—इहाम्रतरौ त्वां वयं कोकिलं मन्महे जानीमहे, यतः स्थलवैभवेन स्थानमाहात्म्येन कतिचिद्वस्तूनि धन्यानि भवन्तीति सामान्येन पूर्वोक्तविशेषसमर्थनं अत्रापि तदाकाङ्क्षायां विशेषरूपमर्थान्तरं न्यस्यति—नेपालभूमिपालस्य भाले पतिते पङ्के कस्तूरिकां को न शङ्केतापितु सर्व इति। मालिन्यमिति, मधुलिट् भ्रमरः कलङ्कश्च तौ अब्जशशिनोर्मालिन्यं धत्तः कुरुतः तव मुखे तु दृक् च तिलकाञ्जनस्य तयोराभां शोभां धत्त इत्यनुषज्यते। अञ्जनाभे इति पाठे द्वितीयाद्विवचनं उक्तमर्थं सामान्येन समर्थयति, दोषावपि क्वचित्, मेलनतो मिथ्याङ्गमिलनात् गुणत्वं इतः प्राप्नुत इति; कथमेतत्तत्राह—हि यतः वक्तुर्वचसि भ्रमविप्रलम्भौ भ्रान्तिप्रतारणे गुणौ भवतः—घटवति घटाभावं निर्णीय परप्रतारणाय घटोऽस्तीति प्रयुक्ते वाक्ये प्रमाजनकत्वात्तयोर्गुणत्वमिति भावः ॥

॥ इति विकस्वरालङ्कारः ॥६२॥

प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनं।
कचाः कलिन्दजातीरतमालस्तोममेचकाः॥

काष्र्ण्यातिशया हेतौ तद्धेतुत्वप्रकल्पनं प्रौढोक्तिः, यथा तमालगतनैल्यातिशयाहेतौ यमुनातटरोहण-तद्धेतुत्वप्रकल्पनम्।

यथा वा—

कल्पतरुकामदोग्ध्री चिन्तामणिधनदशङ्खानां।
रचितो रजोभरपयस्तेजः श्वासान्तराम्बरैरेष॥

अत्र कल्पवृक्षाद्यलौकिकवितरणातिशयाविवर्णनीयराज-वितरणातिशया हेतौ कल्पवृक्षपरागादिरूपपञ्चभूत-निर्मितत्वेन तद्धेतुत्वप्रकल्पनं प्रौढोक्तिः॥६३॥

प्रौढोक्तिरिति, उत्कर्षस्याहेतावुत्कर्षहेतुत्वकल्पनं प्रौढोक्तिः। कलिन्दजा यमुना स्तोमः समूहः मेचकाः श्यामाः रोहणे उद्भवे; कल्पेति, एष राजा कल्पवृक्षादीनां क्रमेण रजोभरादिभिः पञ्च-भिर्भूतैरचित इत्यन्वयः। धनदः कुबेरः शङ्खो निधिविशेषः रजोभरः परागसमूहः पयो दुग्धं श्वासप्रसिद्धः अन्तराम्बरं शङ्खाभ्यन्तरमाकाशं अतिशयीत्यग्निमवितरणेनान्वितं अहेतौ पञ्चनिर्मितत्वे इति सामानाधिकरण्येनान्वयः।

॥ इति प्रौढोक्तिः ॥६३॥

सम्भावना ।

सम्भावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।
यदि शेषोभवेद्वक्ता ! कथिताः स्युर्गुणास्तव ॥

यथा वा—

कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय ।
यदि पुनरहं विधिः स्यां ! खलजिह्वायां निवेशयिष्यामि ॥

यद्यर्थोक्तौ च कल्पनमतिशयोक्तिभेद इति काव्यप्रकाशकारः ॥६४॥

किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनं ।
मिथ्याध्यवसितिर्वेश्यां वशयेत् खजस्रं वहन् ॥

अत्र वेश्यावशीकरणस्यात्यन्तासम्भावितत्वसिद्धये गगनकुसुममालिकाधारणरूपार्थान्तरकल्पनं मिथ्याध्यवसितिः ।

सम्भावनेति, जहत्स्वार्थः; कस्तूरिकेति, अहं यदि सृष्टिकर्त्ता स्यां ! तदा कस्तूरिकामृगाणामण्डादखिलं गन्धरूपगुणमादाय खलजिह्वायां निवेशयिष्यामीत्यन्वयः ॥

॥ इति सम्भावनालङ्कारः ॥ ६४ ॥

किञ्चिदिति, कस्यचिदर्थस्य मिथ्यात्वसिध्यर्थं मिथ्याभूतार्थान्तरकल्पनं मिथ्याध्यवसितिरलङ्कारः । वेश्यामित्युदाहरणं, खजस्रं गगनमालां अत्र खपुष्पमालाधारणमिव वेश्यावशीकरणमिति निदर्शनापि बोध्या ।

यथा वा -

अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्त्तयः।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरात्
मूकानां प्रकरेण कूर्म्मरमणी दुग्धोदधे रोधसि॥

अत्राद्योदाहरणं निदर्शनागर्भं द्वितीयन्तु शुद्धं असम्बन्धे सम्बन्धरूपातिशयोक्तितो मिथ्याध्यवसितेः

अस्येति, परार्धपरया परार्द्धसङ्ख्यामतिक्रान्तया लक्षीकृता उपलक्षिताः, प्रज्ञाचक्षुषा अन्धेनावेक्ष्यमाणाश्च ता बधिरश्राव्याश्चेति कर्म्मधारयः; कलयता कुर्वता प्रकरेण समूहेन, कूर्म्मरमणी कच्छपी रोधसि तीरे; मिथ्याध्यवसितेरित्यस्य भेद इत्यत्रान्वयः। कल्पनाविच्छित्तिविशेषेण कल्पनाप्रयुक्तविच्छित्तिविशेषेणकल्पनात्मनेतिपाठे कल्पनास्वरूपेणेत्यर्थः। उपधेयसङ्करेऽप्युपाधेरसङ्करात् विच्छित्तिविशेषेणेति च तस्यैव विशेषणं विच्छित्तेर्विशेषो यस्मादितिविच्छित्तिं विशेषयति व्यावर्त्तयतीति वा व्युत्पत्तेः, एतेन प्रौढोक्तेरिव गतार्थतामाचक्षाणा निरस्ता वेदितव्याः। न च मिथ्याध्यवसितेरलङ्कारान्तरत्वे—'हरिश्चन्द्रेण सञ्जप्ताः प्रगीता धर्म्मसूनुना। खेलन्ति निगमोत्सङ्गे मातर्गङ्गे! गुणास्तव' इत्यादौ हरिश्चन्द्रादिसम्बन्धाद्गुणानां सत्यताप्रतीतेः सत्याध्यवसितिरपि तथा स्यादिति वाच्यं? सत्यताप्रतीत्यर्थं वस्तुपर्य्यस्य कविप्रतिभाकल्पितत्वाभावेन शब्दमात्रेणालङ्कारताया असम्भवात्; कवि-

किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पना...ना विच्छित्तिविशेषेण भेदः ॥ ६५ ॥

वर्ण्ये स्याद्वर्ण्यवृत्तान्तप्रतिबिम्बस्य वर्णनम्।
ललितं निर्गते नीरे सेतुमेषा चिकीर्षति ॥

प्रस्तुते धर्मिणि यो वर्णनीयो वृत्तान्तस्तमवर्णयित्वा तत्रैव तत्प्रतिबिम्बरूपस्य कस्यचिदप्रस्तुतवृत्तान्तस्य वर्णनं ललितं यथा कथञ्चित् दाक्षिण्यसमागतत्वकालोपेक्षित प्रतिनिवृत्तनायिकान्तरासक्तनायकानयनार्थं सखीं प्रेषयितुकामां नायिकामुद्दिश्य सख्या वचनेन तद्व्यापारप्रतिबिम्बभूतगतजलसेतुबन्धवर्णनं नेयमप्रस्तुतप्रशंसा प्रस्तुतधर्मिकत्वात्, नापि समासोक्तिः प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाधारण्येन सारूप्येण वा अप्रस्तुतवृत्तान्तस्फूर्त्यभावात्, अप्रस्तुतवृत्तान्तादेव सरूपादिह प्रस्तुतवृत्तान्तस्य गम्यत्वात्, नापि निद-

प्रतिभामात्रकल्पिता अर्थाः काव्ये अलङ्कारपदास्पदमिति विषमालङ्कारप्रकरणे त्वयैवाभिधानादित्यलं विस्तरेण ॥

॥ इति मिथ्याध्यवसितिः ॥ ६५ ॥

प्रस्तुत इति, ललितमिति लक्ष्यनिर्देशः निर्गं इत्यं, दाक्षिण्येत्यादित्रप्रत्ययान्तचतुष्टयं नायकविशेषणं, दाक्षिण्यं अनुरोधशीलत्वं । तद्व्यापारेति, सखीप्रेषणरूपनायिकाव्यापारसरूपेत्यर्थः; सारूप्यं चात्रनैरर्थक्यं कथमलङ्कारत्वमत-

शेना,प्रस्तुताप्रस्तुतवृत्तान्तयो: शब्दोपात्तयोरैक्यसमा-
रोप एव तस्या: समुन्मेषात्,यदि विषयविषयिणो: शब्दो-
पात्तयो: प्रवर्त्तमानएवालङ्कारोविषयिमात्रोपादानेपि
स्यात्तदारूपकमेव भेदेप्यभेदरूपाया अतिशयोक्तेरपि
विषयमाक्रमेत्। ननु तर्हि अत्र प्रस्तुतनायकादिनिगर-
णेन तत्र शब्दोपात्ताप्रस्तुतनोराद्यभेदाध्यवसाय इति
भेदे अभेदरूपातिशयोक्तिरस्तु एवं तर्हि सारूप्य-
निबन्धना अप्रस्तुतप्रशंसाविषयेपि सैवातिशयोक्ति: स्यात्
अप्रस्तुतधर्मिकत्वान्नभवतीतिचेत्? तत्राप्यप्रस्तुत-
धर्मिवाचकपदस्यापि प्रसिद्धातिशयोक्त्युदाहरणेष्विव
प्रस्तुतधर्मिलक्षकत्वसम्भवात्। नन्वप्रस्तुतप्रशंसायां
सरूपादप्रस्तुतवाक्यार्थात् प्रस्तुतवाक्यार्थोऽवगम्यते—
नत्वतिशयोक्ताविव विषयवाचकैस्तत्पदैर्विषया लक्ष्यन्त

भावमाशङ्क्य निराकरोति—नेयमित्यादिना। प्रस्तुताप्रस्तुतेति,
तथाच प्रकृतेऽप्रस्तुतवृत्तान्तस्यैकस्यैवोपदानान्निदर्शना; न युक्तेति,
ननूभयो: शब्दोपात्तत्वइवाप्रस्तुतमात्रस्य तत्त्वेपि निदर्शनास्त्वि-
त्याशङ्क्याह—यदीति, प्रतिबन्द्या तावत्परिहरति—तर्हि सारू-
प्येति, 'एक: कृती शकुन्तेषु योऽन्यंशक्रान्ययाचत' इत्यादावित्यर्थ:॥
अप्रस्तुतेति, अप्रस्तुतस्य शकुन्तादेस्तत्र वर्णनौयत्वादतिशयोक्ति-
त्वेऽपि च वापी कापीत्यादौ वापीत्यादिना प्रस्तुतनाय्यादेर्वक्ष्यत्वा
आतिशयोक्तिस्तत्रापादयितुं शक्येति भाव:। अप्रसिद्धोयं हेतु-
रित्याह—तत्रेति, वापीकापीत्यादिसर्वसम्मतेत्यर्थ: ॥

इति भेद इति चेत्? तर्हि इहापि प्रस्तुतगतादप्रस्तुतवृत्तान्तरूपाद्वाक्यार्थात्तद्गतप्रस्तुतवृत्तान्तरूपो वाक्यार्थोऽवगम्यत इत्येवातिशयोक्तितो भेदोऽस्तु॥

वस्तुतस्तु—

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा।
पूर्वं निश्चितवानसि भ्रमर हे! यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः॥

इत्याद्यप्रस्तुतप्रशंसोदाहरणे प्रथमप्रतीतादप्रस्तुतवाक्यार्थात् प्रस्तुतवाक्यार्थोऽवगम्यत इत्येतन्न घटते अप्रस्तुते वारणस्य भ्रमरासेव्यत्वे कर्णचापलमात्रस्य भ्रमरनिराकरणहेतुत्वसम्भवेऽपि रसना विप-

तत्रतेति, प्रसिद्धेति, प्रस्तुतगतेत्यर्थः; अप्रस्तुतप्रशंसायां क्वचित्प्रस्तुताप्रस्तुतयोरभेदाध्यवसानमप्यप्रस्तुतवाक्यार्थप्रतीतिकाले दृश्यते ललिते तु न क्वापीति सुतरामतिशयोक्तितो भेद इत्याह—सोऽपूर्व इत्यादिना, रसनाविपर्ययः अग्निशापकारिणां जिह्वापरिवृत्तिः पूर्वविपरीताभिधानञ्च कर्णचापलं प्रसिद्धं पिशुनप्रतार्यत्वञ्च मदः प्रसिद्धः गर्वश्च तेन विस्मृतास्वपरयोर्दिङ्मार्गः आशानामविभागश्च यया सा दृष्टिः, वारणो गजः वारकश्च शून्यः सरन्ध्रः धनरहितश्च करः शुण्डो हस्तश्च अयञ्च भावः कुतोन-घटते तत्राह—अप्रस्तुत इति—एतच्च, भ्रमरासेव्यत्व इत्यस्य

येयाम्लःशून्यकरत्वयोर्हेतुत्वासम्भवेन मदस्य प्रस्तुतत्सेव्यत्वएव हेतुत्वेन च रसना विपर्ययादीनां तत्र हेतुत्वान्वयार्थं वारयापदस्य दुष्प्रभुरूपविषयक्रोडीकारेणैव प्रवृत्तेर्वक्तव्यत्वात्; एवं सत्यपि यद्यप्रस्तुतसम्बोधनादिविच्छित्तिविशेषात्तत्राप्रस्तुतप्रशंसाया अतिशयोक्तितोभेदोघटते तदात्रापि प्रस्तुतं धर्मिणां स्वपदेन निर्दिश्य तत्राप्रस्तुतवर्णनारूपस्य विच्छित्तिविशेषस्य सद्भावात्ततोभेदः सुतरां घटते—'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति' 'वापीकपि स्फुरति गगने तत्परं सूक्ष्म पद्या' इत्यादिषु तु प्रस्तुतस्य कस्यचिद्धर्मिणः स्वावकेनानिर्दिष्टत्वादतिशयोक्तिरेवैतेन गतजलसेतुबन्धवर्णनादिष्वसम्बन्धे सम्बन्धातिशयोक्तिरस्त्विति शङ्कापि निरस्ता; तथा सति 'कान्त भोः कथयामि'

विशेषणं भ्रमरनिरासकरणस्येति च कर्णचापलमात्रस्येत्यस्य क्रोडीकारः स्वार्थेन सममभेदाध्यवसायः। अप्रस्तुतसम्बोधनादिति, आदिना सारूप्यनिबन्धनप्रस्तुतवाक्यार्थावगतिपरिग्रहः। अत्रापि ललितालङ्कारेऽपि; वर्णनारूपस्येति, चमत्कारितारूपाया विच्छित्तेस्तदवच्छेदकवर्णनारूपत्वमित्यभिप्रायः। कस्यचित् नीलद्वंद्वादेः स्ववाचकेन नेत्रादिपदेन अनिर्दिष्टत्वात् अप्रतिपादितत्वात् अतिशयोक्तिरस्तीति, अतिशयोक्तिरेवास्तीत्यर्थः।

इत्यादावपि तत्प्रसङ्गात्, सादृश्यनिबन्धनप्रस्तुतवाक्यार्था वगतिरूपधर्मिच्छित्तिविशेषात्तङ्कारान्तरकल्पनक्लेशापि तुल्यं तस्मात् स ऽलङ्कारभिन्नलक्षणमिदं ललितम्।

यथा वा—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥

अत्रापि निदर्शनाभ्रान्तिर्न कार्या अल्पविषयया मत्या सूर्यवंशं वर्णयितुमिच्छुरहमिति प्रस्तुतवृत्तान्तानुपन्यासात्; प्रतिबिम्बभूतस्य उडुपेन सागरं तितीर्षुरस्मीत्यप्रस्तुतस्य वर्णनेनादौ विषमालङ्कारविन्यसनेन च केवलं तत्र तात्पर्यस्य गम्यमानत्वात्।

यथा वा—

अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य।
त्वदाप्तसङ्केततया कृतार्था श्राव्यापि नानेन जनेन संज्ञा॥

तत्प्रसङ्गात्, सम्बोध्यत्वोचारयितृत्वयोरसम्बन्धेऽपि सम्बन्धवर्णनादतिशयोक्तिमात्रप्रसङ्गात् अलङ्कारान्तरं कल्पितमित्यादावप्रस्तुतप्रशंसा प्रजाते तु ललितमिति। तत्प्रतिबिम्बेति, प्रस्तुतार्थप्रतिबिम्बरूपस्याप्रस्तुतार्थस्येत्यर्थः। आदौ पूर्वार्धे। विषमेति, स्वमतिसूर्यवंशयोरत्यन्ताननुरूपत्वरूपेत्यर्थः। तात्पर्यस्य तादृशमतिकरणकसूर्यवंशवर्णनेच्छाभिप्रायस्य।

अनायीति, नलम्प्रति दमयन्त्या उक्तिः, हे नल! अयं त्वया कतमो देशः वसन्तमुक्तस्य वनस्य दशामनायिप्रापितः त्वयि प्राप्त-

अथ कतमो देशस्त्वया परित्यक्त इति प्रस्तुतार्थमनुपन्यस्य वसन्तमङ्गलस्य वनस्य दशामनायीति तत्प्रतिबिम्बभूतार्थमात्रोपन्यासाल्ललितालङ्कारः ॥ ६६ ॥

उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ।
तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥

उत्कण्ठा इच्छाविशेषः । "सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते । तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयोविदु" इत्युक्तलक्षणात्तद्विषयस्यार्थस्य तदुपायसम्पादनयत्नं विना सिद्धिः प्रहर्षणम् । उदाहरणं स्पष्टं ।

सङ्केततया कृतार्था संज्ञा नामापि अनेन मन्त्रणेन अनेन न श्राव्या न श्रवणार्हा अपितु श्राव्यैवेति अत्र च तादृशवनदशारूपस्याप्रस्तुतार्थस्य प्रस्तुते देशे कथनात्प्रस्तुतवृत्तान्तस्योक्तरूपस्य प्रतीतिः । न चात्र वारणेन्द्रलीलामिति वत्पदार्थनिदर्शना युक्तेति वाच्यम् ? तत्र पूर्वार्द्धेन प्रकृतवृत्तान्तोपादानेन सादृश्यपर्यवसानरूपनिदर्शनासत्त्वेप्यत्र तदनुपादानेन तदाक्षेपप्रयुक्तविच्छित्तिविशेषत्वेन ललितालङ्कारस्यैवौचित्यात् एतेन दशापदलक्षितनिःश्रीकत्वरूपकार्यद्वारेण कारणस्य राजकर्तृकत्यागकर्मत्वस्याभिधानात् पर्यायोक्तमित्यपि निरस्तं उपमेयसङ्करेप्युपाधिः सङ्करादेतिसङ्क्षेपः ॥

॥ इति ललितम् ॥ ६६ ॥

तामेवेति, दूतिका मित्रेत्यर्थः, निसृष्टा प्रेषिता; ससङ्कल्पां मनोरथसहिताः। मित्रेति, मेदुरं तुन्दिलं नक्तं रात्रिरस्तीति शेषः।

यथा वा—

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे ! गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥

अत्र राधामाधवयोः परस्परमुत्कण्ठितत्वं प्रसिद्धतरमग्रे च ग्रन्थकारेण निबद्धमित्यत्रोदाहरणे लक्षणानुगतिः ॥

वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ।
दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः ॥ स्पष्टम् ।

यथा वा—

चातकस्त्रिचतुरान् पयःकणान्
याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा
हन्त हन्त महतामुदारता ॥

नन्दनिदेशतः नन्दस्य शासनात्; प्रत्यध्वकुञ्जद्रुमं अध्वसम्बन्धिकुञ्जद्रुमं प्रति, ग्रन्थकारेण गोपगोविन्दलता, चातक इति । यत्तु चातकस्य त्रिचतुरकणमात्रार्थितया जलदकर्तृकेणाम्भसा विश्वपूरणेन हर्षाधिक्याभावादयुक्तमुदाहरणमिति तत्तुच्छं हेत्वसिद्धेः—न हि क्षुदुपशमाय तत्पर्याप्तमात्रार्थिनस्तदधिकान्नलाभे हर्षाधिक्यं नास्तीति वक्तुं शक्यते ? तदानीमुपयोगाभावेऽपि स्वस्यैव कालान्तरे तदुपयोगसम्भवात् । न च चातकस्य जलसङ्ग्रहा-

यत्नादुपायसिद्ध्यर्थात् साक्षाल्लाभः फलस्य च।
निध्यञ्जनौषधीमूलं खनता साधितो निधिः॥

फलोपायसिद्ध्यर्थाद्यत्नान्मध्ये उपायसिद्धिमनपेक्ष्य साक्षात्फलस्यैव लाभोऽपि प्रहर्षणम्, यथा निध्यञ्जनसिध्यर्थं मूलिकां खनतस्तत्रैव निधेर्लाभः॥

यथावा—

उच्चित्य प्रथममवस्थित मृगाक्षी
पुष्पौघं श्रितविटपं गृहीतुकामा।
आरोढुं पदमदधादशोकयष्टा वा
मूलं पुनरपि तेन पुष्पिताभूत्॥

अत्र पुष्पग्रहणोपायभूतारोहणसिध्यर्थात्पदनिधानात्तत्रैव पुष्पग्रहणलाभः॥६७॥

नुपयोगाद्वैषम्यं शङ्कनीयं चातकवृत्तान्तस्याप्रस्तुततया तदङ्गे प्रस्तुतदात्रयाचकवृत्तान्ते काव्यस्य पर्य्यवसानादिति तृतीयं प्रभेदमाह—यत्नादिति. प्रहर्षणमित्यनुवर्तते।

निध्यञ्जनेति, निधिदर्शनसाधनं यदञ्जनं तत्साधनौषधीमूलमित्यर्थः, साधितोलब्धः। उच्चित्येति, अधः स्थितं वृक्षस्याधोदेशे स्थितम् अवस्थितमिति पाठे समीपाशोकयष्टाववस्थितमित्यर्थः। श्रिता आश्रिताः विटपाः शाखा येनेति पुष्पौघविशेषणम्। अदधात् आहितवती यष्टिः स्कन्धः तेन पादाघातेन पुनरप्यामूलं पुष्पिताभूदर्थादशोकयष्टिः। अत्र च तदसाध्यकयत्नात्तल्लाभ इति प्रकारत्रयसाधारणं सामान्यलक्षणं बोध्यम्॥

॥ इति प्रहर्षणम्॥६७॥

इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनं।
दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः॥

यथा वा—

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।
इत्थं विचिन्तति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार॥९८॥

एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि
अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी।
काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः
निन्दन्ति च विधातारं त्वद्धाटीष्वरियोषितः॥

इष्यमाणविरोधोर्थस्तत्सम्प्राप्तिर्विषादनमलङ्कारः। उद्योजयेत् उद्दीप्तं कुर्यात्, उद्योजयेद्यावदित्यनेन तदिच्छामात्रं न तु तत्करणमिति विषमाद्भेदः एवमग्रिमोदाहरणेपीच्छामात्रं नत्विष्टोत्पत्त्यनुकूलाचरणमिति॥

॥ इति विषादनम् ॥९८॥

एकस्येति, एकस्य गुणदोषाभ्यामन्यस्य तौ गुणदोषौ यदि भवतस्तदोल्लासालङ्कारः॥

अपीति, अपि सम्भावनायां साध्वी पतिव्रता स्नात्वा मां पावयेदिति जाह्नवी इच्छतीत्यन्वयः। तव धाटीषु युद्धयात्रासु कुचयोः स्रष्टुं काठिन्यं पादपद्मयोर्वाञ्छन्त्योरिति योषितः

तद्भाग्यं धनस्यैव यन्नाश्रयति सज्जनं
लाभोयमेव भूपालसेवकानां नचेद्वधः ।

यत्र कस्यचिद्गुणेनान्यस्य गुणदोषेण गुणो वा वर्ण्यते स उल्लासः। द्वितीयार्द्धमाद्यस्योदाहरणं तत्र पतिव्रतामहिमगुणेन तदीयस्नानतोगङ्गायाः पावनत्वगुणोवर्णितः द्वितीयस्लोके द्वितीयस्योदाहरणं तत्र राज्ञोधाटोषु वने पलायमानानारातियोषितां पादयोर्धावनपरिपन्थिमार्दवदोषेण तयोः काठिन्यमस्पृष्ट्वा व्यर्थं कुचयोस्तत्सृष्टवतोधातुर्निंद्यत्वदोषो वर्णितः तृतीयस्लोकस्तृतीयचतुर्थयोरुदाहरणं तत्र सज्जनमहिमगुणेन धनस्य तदनाश्रयणं दोषत्वेन राज्ञः क्रौर्यदोषेण तत्सेवकानां बधं विना विनिर्गमनं गुणत्वेन वर्णितं अनेनैव क्रमेणोदाहरणान्तराणि—

यद्दयं रथसंक्षोभा दंसेनांसोनिपीडितः ।
एकः कृती मदङ्गेषु शेषमङ्गं भुवोभरः ॥

विधातारं निन्दन्तीत्यन्वयः ; स्रष्टुमिति पाठे कुचयोः काठिन्यं पादयोः स्रष्टुमिच्छन्त्य इत्यन्वयः ।

लाभोयमिति, भूपालसेवकानामयमेव लाभो यदि बधो न भवतीत्यन्वयः ।

यद्दयमिति, रथस्य संक्षोभाच्चलनाद्यदयमंसोंसेनार्थाद्दयिताया निपीडितः सस्पृष्टः ममाङ्गेषु मध्ये सएवैकः कृती कुशलः अवशिष्टमङ्गं भूमेर्भारमित्यर्थः। दुर्वंशैर्दृष्टवेणुभिः दुष्कुलैश्चेत्यादिः सेसो

अत्र नायिकासौन्दर्यगुणेन तदन्नम्निपीडितस्य स्वांशस्य क्षतित्वगुणोवर्णितः।

लोकानन्दनचन्दनद्रुम सखे नास्मिन्वने स्थीयतां
दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम्।
तेह्यन्योन्यनिघर्षजातदहनज्वालावलीसङ्कुला
न स्वान्येव कुलानि केवलमिदं सर्व्वं दहेयुर्वनम्॥

अत्र वेणूनां परस्परसङ्घर्षणसञ्जातदहनसङ्कुलत्व-दोषेण वननाशरूपदोषोवर्णितः॥

दानार्थिनोमधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुध्या।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकसपद्मवने चरन्ति॥

अत्र भ्रमराणामलङ्करणत्वगुणेन गजस्य तत्प्रतिक्षे-पोदोषत्वेन वर्णितः॥

आघ्रातं परिचुम्बितं परिमुहुर्लीढं पुनश्चर्वितम्
त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः।

बोध्यः। वननाशरूपः वनसम्बन्धीनांशरूपः। वनस्येति, युक्त-तरपाठः। तत्प्रतिक्षेपोभ्रमरनिरासः; गजस्य दोषत्वेनेति सम्बन्धः।

आघ्रातमिति, मुहुः परिलीढं आस्वादितं नीरसेन मनसा करणभूतेन वानरेण कर्त्रा तत्र तस्मिन् सति विचारणव्यसनिना विचारणतत्परेण अश्मना पाषाणेन प्रथमचतुर्थयोः गुणेन गुण-

हे सद्रत्न ! तवैव देव कुशलं यद्वा नरेणादरा-
दन्तःसारविलोकनव्यसनिना चूर्णीकृत नाश्मना ॥

अत्र वानरस्य चापलदोषेण रत्नस्य चूर्णनाभावो गुणत्वेन वर्णितः ; अत्र प्रथमचतुर्थयोरुल्लासोऽन्वर्थः, मध्यमयोश्छत्रिन्यायेन लाक्षणिकः ॥९९॥

ताभ्यां तौ यदि न स्यातामवज्ञालङ्कृतिस्तु सा ।
स्वल्पमेवाम्बु लभते प्रस्थं प्राप्यापि सागरं ॥
मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः ।

ताभ्यां गुणदोषाभ्यां तौ गुणदोषौ; अत्र कस्यचिद्गुणेनान्यस्य गुणालाभे द्वितीयार्धमुदाहरणं ; दोषेण दोषस्याप्राप्तौ तृतीयार्धं ।

यथा—

मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ! ।

दोषेण वा गुण इति भेदयोः उल्लासः उल्लासशब्दः अन्वर्थ इति उत्कृष्टोल्लासः सुखं यत्रेत्यर्थानुगत इत्यर्थः । छत्रिन्यायेनेति केषुचिच्छत्रसम्बन्धाच्छत्रच्छत्रिसमुदाये छत्रिणो यान्तीति वदित्यर्थः ॥ ॥ इत्युल्लासः ॥९९॥

प्रस्थं प्रस्थपरिमाणपात्रम् । मदुक्तिरिति, ममोक्तिः कविता सुधियोऽन्तःकरणं सुधीभूयामृतीभूय चेन्मदयति तोषयति तदास्या मदुक्तेः अरसानां नीरसाणां पुरुषाणामनादरसमूहैः किं नाम स्यान्न किञ्चिदित्यर्थः । क्वचिदलसेति पाठः, परमरमणीयापि

यथा यूनस्तद्वत्परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते॥
त्वञ्चेत्सञ्चरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणभूषणानि कुरुषे हानिर्न हेम्नामपि।
मूर्द्धन्य कुरुषे सितांशुमयशः किन्नाम लोकत्रयी
दीपस्याम्बुजबान्धवस्य जगतामीशोसि किं ब्रूमहे॥

अत्राद्ये कश्चितारमणगुणाभ्यामलसबालकयोर्हृदयोल्लासरूपगुणाभावोवर्णितः। द्वितीये परमेश्वरानङ्गीकरणदोषेण दिग्गजादीनां लघुतादिदोषाभावो वर्णितः॥ ७०॥

दोषस्याभ्ययनानुज्ञा तत्रैव गुणदर्शनात्।
विपदः सन्तु नः शश्वद्यासु सङ्कीर्त्यते हरिः॥ यथावा—
मय्येव जीर्णतां यातु यत्त्वयोपकृतं हरे॥

कैव रमणी स्त्री युनस्तरुणस्य यथान्तःकरणहरणं कुरुते तद्वद्कुमाराणां बालानामित्यन्वयः। त्वञ्चेदिति, शिवं प्रति कस्यापि कवेरुक्तिः—जलांशुं चन्द्रं पक्षे जडांशुं, अम्बुजबान्धवः सूर्यः उल्लासरूपगुणाभावः॥

॥ इत्यवज्ञा॥ ७०॥

दोषस्येति, अभ्यर्थना इच्छा तत्रैव दोष एव, अनुज्ञेति लक्ष्यनिर्देशः। शश्वन्निरन्तरं सङ्कीर्त्यत इत्यनेनान्वयि। मय्येवेति, जीर्णतां प्रत्युपकाराक्षमतां। हरिशब्दो वानरार्थः। व्यतिरेकमुखेति वैधर्म्यमुखेत्यर्थः। अस्य चार्थान्तरन्यासेनेत्यनेनान्वयः।

नरः प्रत्युपकारार्थी विपत्तिमभिकांक्षति॥

इयं हनुमन्तं प्रति राघवस्योक्तिः; अत्र प्रत्युपकाराभावोदोषस्तदभ्युपगमे हेतुर्गुणोविपत्त्याकांक्षाया अप्रसक्तिः। सा च व्यतिरेकमुखदृष्टत्तेन सामान्येन विशेषसमर्थनरूपेणार्थान्तरन्यासेन दर्शिता। यथा वा—

भजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसंपदः प्रमथनाथ! नाथामहे।
भवद्भवनदेहलीविकटतुण्डदण्डाहति-
त्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते॥७१॥

लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनं।
अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु॥
शुकपञ्जरबन्धस्ते मधुराणां गिरां फलं।

दोषस्य गुणत्वकल्पनं गुणस्य दोषत्वकल्पनञ्च लेशः। उदाहरणं—राज्ञोभिमते विदुषि पुत्रे चिरं

दर्शितेति, वैधर्म्यविपर्यये प्रत्युपकारानभिलाषी विपत्तिं नाकाङ्क्षतीत्यर्थपर्यवसानादिति भावः। भजेमेति, हे प्रमथनाथ! हर! पैशाचिकीं पिशाचसम्बन्धिनीं प्रकृतीं पिशाचतामेत्य प्राप्य भवतोऽन्तिकं समीपदेशं भजेम अमरसम्पत्तीः किमिति प्रार्थयामहे यतोमघवदादिभिरिन्द्रप्रमुखैरपि भवद्भवनदेहलीषु विकटतुण्डस्य दण्डाघातैः स्फुटन्मुकुटाग्रैर्भूयत इत्यर्थः॥ इत्यनुज्ञा॥७१॥

॥ लेशइति लक्ष्यनिर्देशः, प्रवसतीति सप्तम्यन्तम्॥

राजधान्यां प्रवसति तद्दर्शनोत्कण्ठितस्य गृहे स्थितस्य पितुर्वचन अप्रस्तुतप्रशंसारूपं; तत्र प्रथमार्द्धे इतरविहङ्गानामवक्तृत्वदोषस्य स्वच्छन्दचारणानुकूलतया गुणत्वं कल्पितं; द्वितीयार्धे मधुरभाषित्वस्य गुणस्य पञ्जरबन्धहेतुतया दोषत्वं कल्पितं। न चात्र व्याजस्तुतिराशङ्कनीया—नह्यत्र विहङ्गान्तराणां स्तुतिव्याजेन निन्दायां शुकस्य निन्दाव्याजेन स्तुतौ च तात्पर्यं किन्तु पुत्रदर्शनोत्कण्ठितस्य दोषगुणयोर्गुणदोषत्वाभिमान एवात्र श्लोके निबद्धः॥

यथा वा—

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः॥

दण्डीत्वचोदाजहार—

युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि॥

शुकस्यनिन्दायाः निन्दाव्याजेन स्तुतौ चेत्यन्वयः॥ सन्त इति, सच्चरितस्योदयोवृद्धिः तद्व्यसनिनस्तत्परा प्रादुर्भवद्यन्त्रणं स्वेच्छाचरणनिरोधोयेषांते सर्वत्रैव विषये दुःखमिति क्रियाविशेषणं अव्युत्पन्नमतिः अनिपुणमतिः सता समीचीनेन कृतेनाचरणेन प्राकृतोनीचः। युवैष इति, वराथिंनकौं न्यकां प्रति सखीवचनं—

चपलोनिजः किन्ते न मे सखि ! ।
आगः प्रमार्जनायैव चाटवोयेन शिक्षिताः ॥

अत्राद्य श्लोके राज्ञोवीर्योत्कर्षस्तुतिः कन्याया निरन्तरसम्भोगनिर्विवित्सोर्दोषत्वेन प्रतिभासता-मित्यभिप्रेत्य विदग्धया सख्या राजप्रकोपपरिजिहो-र्षया सएव दोषोगुणत्वेन वर्णितः उत्तरश्लोके सर्वोभि रूपदिष्टं मान कर्त्तुमशक्नुयापि तदग्रतोमान परिग्रहानुगुण्यं प्रतिज्ञाय तदनिर्वाह माशङ्क-मानता सखीनामुपहासं परिजिहोर्षन्त्या नायिकया नायकस्य चाटुकारितागुणएव दोषत्वेन वर्णितः ।

नचाद्यश्लोके स्तुतिर्निन्दापर्यवसायिनी, द्वितीय-श्लोके निन्दास्तुतिपर्यवसायिनीतिव्याजस्तुतिराशंक-नीया राजप्रकोपादिपरिहारार्थमिह निन्दास्तुत्यो-रन्याविदिततया लेशत एवोद्घाटनेन ततोविशेषा-दिति। वस्तुतस्त्विह व्याजस्तुतिसद्भावेऽपि न दोषः—

चपल इत्यादि च नायिकायाः सखीं प्रति उक्तेक इति पाठे-प्युत्कर्ष एवार्थः कन्याया दोषत्वेन भासतामित्यन्वयः निर्विर्ति-तुमिच्छा निर्विवर्तिषा तद्रूपदोषत्वेनेत्यर्थः। निर्विवित्सोरिति-पाठेरात्रविशेषणं कुतस्तर्हि गुणत्वेन वर्णनं ? तत्राह—राज प्रकोपेति, अन्येनाविदितं यथा स्यादिति क्रियाविशेषणं।

नह्येतावता लेशमात्रस्य व्याजस्तुत्यन्तर्भावः प्रसज्यते, तदसङ्कीर्णयोरपि लेशोदाहरणयोर्दर्शितत्वात्, नापि व्याजस्तुतिमात्रस्य लेशान्तर्भावः प्रसज्यते, भिन्नविषयव्याजस्तुत्युदाहरणेषु "कस्त्वं वानर! रामचन्द्रभवने लेखार्थसंवाहको यद्वत्तं मुकुरीजसे न धनिनां ब्रूषे न चाटून्मृषा"—इत्यादिषु दोषगुणीकरणस्य गुणदोषीकरणस्य चाभावात्। तत्रान्यगुणदोषाभ्यामन्यत्र गुणदोषयोः प्रतीतेः विषयैक्येऽपि "इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारिर्दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि" अद्याप्युर्वी वलयतिलकश्यामलिम्नानुलिप्तान्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयै" रित्याद्युदाहरणेषु लेशास्पर्शनात्, तत्र हीन्दुलक्ष्मादीनां धवलीकरणाभावदोष एव

लेशत एवेति, तदुक्तं दण्डिनेव "लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृता"मिति लेशमात्रस्येति कृत्स्नार्थकं। उदाहरणयोः अखिलेष्वित्याद्योः। भिन्नविषयेति, अन्यनिन्दयान्यस्य स्तुतिरन्यस्तुत्यान्यनिन्देत्येवमादि रूपेत्यर्थः। ननु तथाप्येकविषया व्याजस्तुतिर्न लेशाद्भिद्यतेत्याशङ्क्याह—विषयैक्येऽपीति, लेशास्पर्शनादित्यपि तत्रैवान्वयः। इन्दोरिति, हे उर्वीवलय-तिलकरूपराजन्! त्वदीयैर्यशोभिः किं धवलितं?—तद्वद,

गुणत्वेन न पर्यवस्यति किन्तु परिसंख्यारूपेण ; ततो ऽन्यत्सर्वं धवलितमित्यन्यगुणः प्रतीयते। क्वचिद्व्याज-स्तुत्युदाहरणे गुणदोषीकरणसत्वेऽपि स्तुतेर्विषया-न्तरमपि दृश्यते।

यथा—

सर्वदा सर्वदोसीति मिथ्या संस्तूयसे बुधैः।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः॥

अत्र हि वाच्यया निन्दया परिसङ्ख्यारूपेण ततोऽन्यत्सर्वमर्थिनामभिमतं दीनारादि दीयते इति स्तुत्य-न्तरमपि प्रतीयते, एवञ्च येषु उदाहरणेषु कस्ते शौर्यमदो योद्धुमित्यादिषु गुणदोषादिषु गुणदोषी-

यतोऽत्रापि इन्दुलक्ष्मादीनि श्यामलिम्ना श्यामवर्णेनाङ्गुलिमात्रा-भासन्ते इत्यन्वयः। लक्ष्म लाञ्छनं। दिङ्नागानां दिग्गजानां मदजलमेव मषी तल्लाञ्छि सङ्युतानि। परिसंख्येति, एतान्येव श्यामानीत्येवं रूपेत्यर्थः। विषयान्तरं दोषीकृताद्भिन्नं गुणरूप-मालम्बनं।

सर्वदेति, अरयः पृष्ठमर्थात्तव न लेभिरे प्राप्तवन्तः, पलायना-भावात्। दीनारः परिमाणविशेषपरिच्छिन्ना सुवर्णमुद्रा एवञ्च लेशव्याजस्तुत्योरसंकीर्णविषयत्वे च गुणदोषीकरणादिक-मित्यादिपदेन दोषगुणीकरणसंग्रहः। येष्वित्युपक्रमात्तत्रेति

करणादिकमेव व्याजस्तुतिरूपतयावतिष्ठते तत्र लेश-व्याजस्तुत्योः सङ्करोऽस्तु—इत्थमेव च व्याजस्तुत्य-प्रस्तुतप्रशंसयोरपि प्राक् सङ्करोवर्णितः ॥ ७२ ॥

सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः।
नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा॥

अत्र नायिकावर्णनपरेण युग्मविपुलापदेनास्यानुष्टुभोयुग्मविपुलानामत्वरूपसूच्यार्थसूचनं मुद्रा। यद्यप्यत्र ग्रंथे वृत्तनाम्नानास्ति सूचनीयत्वं तथाप्यस्योत्तरार्द्धस्य लक्ष्यलक्षणयुक्तच्छन्दःशास्त्रमध्यपातित्वेन तस्य सूचनीयत्वमस्तीति तदभिप्रायेण लक्षणं योज्यं। एवं नवरत्नमालायां तत्तद्रत्ननामनिवेशेन तत्तन्नाम-

पाठोयुक्ततरः, अन्नेत्यपि युक्त एव, इदमोपि यच्छब्दार्थपरामर्श-कत्वात्॥ इतिलेशः॥ ७२॥

सूच्यार्थेति, सूचनीयस्यार्थस्येत्यर्थः। मुद्रेति लक्ष्यनिर्देशः। दृग्युग्मं विपुलं यस्यास्सा। अत्र ग्रन्थे अस्मिन्नलङ्कारग्रन्थे रत्नमालाशब्देन भगवत्स्तुतिपद्यावलीविशेष उच्यते, रत्ननामनिवेशेन प्रकृतार्थपररत्नवाचिपदघटनेन तत्तन्नामकजातिसूचनं तन्नाम-प्रवृत्तिनिमित्तं रत्नजातिसूचनं नक्षत्रमालाशब्दार्थोऽपि पूर्वोक्त एव, अश्व्यादिदेवतानामभिर्नक्षत्राणां तद्देवत्यानां सूचनं बोध्यं। वक्ष्यमाणेति, यथा अनर्घराघवे—यान्ति न्यायप्रवृत्तस्य

कज्ञातिसूचनं नक्षत्रमालयाग्न्यादिदेवतानामभि-
र्न्नेयवस्तुसूचनमित्यादावयमेवालङ्कारः । एवं नाटकेषु
वक्ष्यमाणार्थसूचनेष्वपि ॥७३॥

क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः ।
चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञत्वं महीपतेः ॥

अत्र चतुरास्यादिपदैर्वर्णनीयस्य ब्रह्मविष्णुरुद्रा-
त्मता प्रतीयत—इति प्रसिद्धसहपाठानां क्रमेण निवे-
शनं रत्नावली । यथा वा—

रत्याप्तप्रियलाञ्छने कठिनता वासे रसालिङ्गिते
प्रह्लादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे ।

तिर्यञ्चोपि सहायतां । अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्च-
तीति सूत्रधारवचनेन वक्ष्यमाणरामवृत्तान्तसूचनमिति बोध्यं ॥
॥इति मुद्रा ॥७३॥

क्रमिकमिति, प्रकृतार्थानां क्रमिकं प्रसिद्धक्रमानुसारि न्यसनं
प्रतिपादनं रत्नावलिरलङ्कारः । प्रकृतत्वञ्च यथाकथञ्चित्प्रकृत
सम्बन्धत्वं बोध्यं । चतुरेति, चतुरमास्यं यस्य सः चतुर्मुखश्च ।
रत्याप्तेति, हे बाले ! भवत्याः स्तने श्रीरमणस्य विष्णोरवतार-
दशकं भातीत्यन्वयः । कीदृशे ?—रतावाप्तं प्राप्तं प्रियस्य
लाञ्छनचिन्हं नखक्षताङ्करादिकं येन तथाभूते कठिनतायाः
आवासे स्थानभूते रसेनालिङ्गिते प्रकृताह्लादे एकरसे तत्परे

कोकस्पर्द्धिनि भोगभाजि जनितानङ्गे खलोनोन्मुखं
भाति श्रीरमणावतारदशकं बाले भवत्याः स्तने ॥

यथा वा—

लीलाब्जानां नयनयुगलद्राघिमा दत्तपत्त्रः।
कुम्भावेभौ कुचपरिकरः पूर्व्वपक्षी चकार ॥
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमाननववादीत।
वक्त्रज्योत्स्ना शशधररुचं दूषयामास यस्याः ॥

अत्र पत्त्रदानपूर्व्वपक्षोपन्यासानुवाददूषणोद्भावनानि बुधजनप्रसिद्धक्रमेण न्यस्तानि प्रसिद्धसहपाठानां प्रसिद्धक्रमाननुसरणेप्ययमेवालङ्कारः ॥

क्रमाद्धलदेरामकादिपरिमाणलाभेनोपचिते प्रवृद्धे भूभृतां पर्वतानां गुरुत्वमपहन्ति नाशयति तादृशे, ततोपि महत्वात् चक्रकोकस्पर्द्धीशीले, तत्सदृशत्वात् भोगः सुखं शरीरं वा तद्भाजि जनितमदने खेष्विन्द्रियेषु लीना आसक्ता उन्मुखा यस्मिन् तादृशे, एतैरेव विशेषणैरवतारदशकरूपतापि स्तनस्य बोध्या। तद्यथा—रत्या श्रामः प्रियः कामस्तस्य लाञ्छनं मत्स्यस्तद्रूपे कठिनतया आवासे कूर्मे रसया पृथिव्या स्वोद्धरणकाल आलिङ्गिते वराहे प्रह्लादे एकोरसः प्रीतिर्यस्य तस्मिन्नृसिंहे क्रमः पादविक्षेपस्तदनुसारेणोपचिते प्रवृद्धे वामने भूभृतां राज्ञां गौरवनाशके भार्गवे कोकस्पर्धिनि सीतावियोगातुरतया चक्रवाक-

यथा वा —

यस्य वह्निमयो हृदयेषु, जलमयो लोचनपुटेषु, मारुतमयः श्वसितेषु, क्षमामयोऽङ्गेषु, आकाशमयः स्वान्तेषु, महाभूतमयो मूर्त इवादृश्यत निहतप्रतिसामन्तान्तः पुरेषु प्रतापः । एवमष्टलोकपालनवग्रहादीनां प्रसिद्धसहपाठानां यथाकथञ्चित् कृतोपमानोपरञ्जकतादिप्रकारेण निवेशने रत्नावल्यलङ्कारः । प्रकृतान्वय

शापदे रामे भोगः फणा तद्राजि शेषावतारे बलभद्रे जनितमनङ्गं अङ्गस्य शरीरस्य विरुद्धं मौनभोगत्यागसमाधिप्रभृतियेन तस्मिन् बुद्धे खलीनमश्वस्य वल्गा तदुन्मुखे कल्किनीति ।

. क्रमानुसरणेपीति, तथा च प्रसिद्धसहपाठानामर्थानां न्यसनं रत्नावलिरिति सामान्यलक्षणं । सक्रमाक्रमत्वे तत्प्रभेदाविति भावः । यस्येति, यस्य प्रतापः निहतानां प्रतिसामन्तानामन्तःपुरेषु पञ्चमहाभूतमयो मूर्त्त इवादृश्यतेत्यन्वयः । पञ्चमहाभूतमयत्वमेव विशेषणैर्दर्शयति,—वह्निमय इत्यादि अङ्गेषु क्षमामयः पृथ्वीमयः पीड़ाभरसहिष्णुत्वात्, स्वान्तेष्वन्तःकरणेषु आकाशमयः तेषां शून्यतामयत्वात् ।

यथाकथञ्चिदित्यस्य प्रपञ्चनं प्रकृतोपमाने यादि उपमानत्वोपरञ्जकं चोपमानोपरञ्जके तयोर्भावस्तत्ता ; प्रकृतं प्रत्युपमानता उपरञ्जकताचेत्यर्थः ; उपरञ्जकता चारोप्यमाणता

विना क्रमिकतत्तन्नाम्ना श्लेषभंग्या निवेशने क्रमप्रसिद्धरहितानां प्रासङ्गसहपाठानां नवरत्नादीनां निवेशनेप्ययमेवालङ्कारः ॥७४॥

तद्गुणः स्वगुणत्यागादन्यदीयगुणाग्रहः ।
पद्मरागायते नासा मौक्तिकं तेऽधरत्विषा ॥

यथा वा—

वीर! त्वद्रिपुरमणीपरिधातुं पल्लवानि संस्पृश्य न जरति वनभुवि निजकररुहरुचिरवचितानि पाण्डुपत्रधिया—पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतं हरकण्ठांशुलिप्तोपि शेषस्त्वद्यशसासितः॥ यथा वा

विभिन्नवर्णा गरुडाग्रजेन
सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वा
मानिन्यिरे वंशकरीरनीलैः ॥

तदुक्तं,—उपरञ्जकतामेति विषयीरूपकं तदेति तत्रोपमानता रविरिव प्रतिदिवसोपजायमानोदय इत्यादिवत् । उपरञ्जकतातु च तुरास्य इत्यादुदाहरणे वह्निमय इत्यादिप्रतापवर्णनेन च स्पष्टेति । प्रकृतान्वयं, विनेति मिवचन्द्रमुखी बाला लोहिताधरपल्लवेत्यादाविति । भावः क्रमिकेत्युपलक्षणं तदभावेपि गुरुणा जघनेनैषा तरुणी मन्दगामिनीत्यादावप्ययमलङ्कार इति बोध्यं ॥

॥इति रत्नावली ॥७५॥

अयमेव तद्गुण इति केचिद्व्याचक्षते:
पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि
दीपे निर्वापिते व्यासीत्काञ्चीरत्नैर्महन्महः।
लक्षणे चकारात् पूर्वरूपमिति लक्ष्यवाचकपदानुवृत्तिः॥

तद्गुण इति स्वगुणत्यागानन्तरं अन्यदीयगुणग्रहणं तद्गुणालङ्कारः। पद्मेति तव नासामौक्तिकमधरकान्त्या पद्मरागपदं धरतीत्यर्थः। वीरेति हवीर त्वदरिकामिनी वनभुवि परिधानं कर्तुं पल्लवानि करेण संस्पृश्य पाण्डुपत्र बुध्या न हरति न गृह्णाति कोहशानि निजकररुहाणां नखानां रुचाश्रितकान्त्यारवचितानि व्याप्तानीत्यर्थः। इति तद्गुणः॥ ५७॥

पुनरिति स्वगुणत्यागानन्तरं पुनः स्वगुणप्राप्तिः पूर्वरूपमलङ्कारः। हरेति नीलोपोतियुक्तः पाठः। विभिन्नेति माघेरैवतकगिरिवर्णनं गरुडाग्रजेनारुणेन विभिन्नवर्णा अभिन्नितवर्णाः सूर्यस्य रथ्याश्वा यत्र गिरौ वंशाङ्कुरवन्नीलै रत्नैः परित स्फुरन्त्या रुचा स्वां रुचन्नीलद्युतिं आनिन्यिरे आनीतवन्तः रुचा विभिन्नवर्णा इति वान्वयः केचिदित्यस्वरसवीजन्तु पद्मरागायत इत्युदाहरणे तद्गुणालङ्कारो न स्यात् न चेष्टापत्तिः अनुभवसिद्धचमत्कारस्यनिरालम्बनत्वापत्ते रित्यूहनीयं अथवायं तद्गुण एवेत्येवकारक्रमभङ्गेन काव्यप्रकाशकारादिमतोपन्यासपरत्वेन व्याख्येयं तैरत्र तद्गुणस्योदाहृतत्वात् अत हि पूर्वमश्वानामरुणगुणत्वं अनन्तरं रैवतकरत्नैरुभयेषां तद्गुणत्वमिति तद्गुणद्वयमिति तेषा-

यथावा—

द्वारङ्गज्रिभिरावृतं वहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ॥
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरन्तनप्रणयिनी शून्येपि राज्यस्थितिः ७६
सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणं ॥
चिरं रागिणि मच्चित्ते निहितोपि न रज्जसि ॥

मभिमतं । पूर्वेति वस्तुनि विकृते विगते सत्यपि पूर्वावस्थाया अनुवृत्तिरपि पूर्वरूपसलङ्कारः । मद्यः प्रकारः ।

द्वारमिति हे राजन् ! तव विद्विषां मन्दिरे शून्येपि चिरन्तनः प्रणयो यस्याः सैव राज्यस्य स्थितिर्मर्यादास्तीति शेषः यतो द्वारङ्गज्रिभिर्गण्डकाख्यपशुभिरेव खड्गधारिभिरावृत वहिरपि भूमयः मदप्रस्विन्नगण्डैर्गजैरध्यासिताः अन्तःपुरभूमयः शिरःसन्मणिधारिभिः कञ्चुकिभिः सर्पैरेव सौविदल्लैरध्यासिताः शयनन्तल्पमहिषीभिर्वनिताभिरेव महिषस्त्रीभिराक्रान्तमित्यन्वयः ॥ इति पूर्वरूपं ॥ ७६ ॥

सङ्गतेति सङ्गतः स्वसम्बन्धोयोन्यःपदार्थस्तद्गुणानङ्गीकारमतद्गुणालङ्कारमाहुः । चिरमिति रागिणि अनुरागिणि मच्चित्ते लाक्षादिरञ्जनद्रव्ययुक्ते च निहितोऽपि त्वं न रज्जसि रक्तगुणग्राहको न भवसीति श्लिष्टम् ।

यथावा —

गङ्गाभोगे विहरति मदैः पिच्छले दिग्गजानां
वैरिस्त्रीणां नयनकमलेष्वञ्जनानि प्रमार्ष्टि ॥
यद्यप्येषा हिमकरकराद्वैत सौवस्तिकीते ।
कीर्त्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंह क्षितीन्द्र ॥

ननु चान्यगुणेनान्यच गुणोदयानुदयरूपाभ्या मुल्लासावज्ञालङ्काराभ्यां तद्गुणातद्गुणयोः कोभेदः । उच्यते । उल्लासावज्ञालक्षणयोर्गुणशब्दो दोषप्रतिपक्षवाची अन्यगुणेनान्यत्र गुणोदयतदनुदयौ च न तस्यैव गुणस्य सङ्क्रमणासङ्क्रमणे किन्तु सङ्गरूपदेशेन सद्गसच्छिष्ययोर्ज्ञानोत्पत्यनुत्पत्तिवत्तद्गुणजन्यत्वेन सम्भावितयोर्गुणान्तरयोरुत्पत्यनुत्पत्ती तद्गुणातद्गुणयोः पुनर्गुणशब्दो रूपरसगन्धादि गुणवाची तत्रान्यदीय गुणग्रहणाग्रहणे च रक्तस्फटिक-

गङ्गेति हे श्रीमन्नृसिंहाख्य भूपते ! एषा तव कीर्तिः मदैः पिच्छले पङ्किले दिग्गजानां गण्डप्रदेशे यद्यपि विहरति तथा वैरिस्त्रीणां नयनकमलेषु स्थितान्यञ्जनानि प्रमार्ष्टि प्रोञ्छति तदपि तथापि दिक्षु हिमकरस्य चन्द्रस्य यत् किरणाद्वैतन्तस्य सौवस्तिकी स्वस्तीत्याहेत्यर्थः । तदाहेति माशब्दादिभ्यश्चेत्याच इत्यनेन ठक् प्रत्ययः तस्याहश्चेति यावत् स्फुरति प्रकाशत इत्यर्थः ।

वस्त्रमालिन्यायेनान्यदीयगुणेनैवानुरञ्जना ।

ननुरञ्जने विवक्षिते तथैव चोदाहरणादि दर्शितानि यद्यप्यत्रालङ्कृतिरतद्गुणस्य विशेषोक्तिवशेषावेव कार्योज निर्विशेषोक्तिः सति पुष्कलकारणा इति तत्सामान्यलक्षणाक्रान्तत्वात् तथाप्युल्लासतद्गुण प्रतिद्वन्द्विना विशेषाकारेणालङ्कारान्तरतया परिगणिता वितिध्येयं ॥ ७७ ॥

प्राक् सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः

नीलोत्पलानि दधते कटाक्षैरतिनीलतां ।

कपिरपि च कापिशायनमदमत्तो वृश्चिकेन सन्दष्टः ॥ अपिच—पिशाचग्रस्तः किम्बुमो वैकृतन्तस्य अत्र कपित्वजात्या स्वतःसिद्धस्य वैकृतस्य मद्यादिभिरुत्कर्षः ॥ ७८ ॥

मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते ।

रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ॥

---

विशेषाकारेणेति प्राक् लक्षिता विशेषरूपेणेत्यर्थः ॥

इत्यतद्गुणः ॥ ७७ ॥

प्रागिति परसन्निधिवशात् पूर्वसिद्धस्य स्वगुणस्योत्कर्षः अनुगुणो नामालङ्कारः नीलोत्पलानि कर्णावतंसीकृतानि कपिरिति कापिशायनं मद्यं ॥ इत्यनुगुणः ॥ ७८ ॥

मीलितमिति लक्ष्य निर्देशः रस इति स्वभावलोहिते चरणे

यथा वा—

मल्लिकामाल्यभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥

अत्राद्ये चरणालक्तकरसयोररुणिमगुणसाम्याद् भेदानध्यवसायः द्वितीयोदाहरणे चन्द्रिकाभिः सारिकाणाम्धवलिमगुणसाम्याद् भेदानध्यवसायः ॥७९॥

सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते।
पद्मा-कार प्रविष्टानां मुखं नालक्षि सुभ्रुवां॥

यथा वा—

रत्नस्तम्भेषु सङ्क्रान्तैः प्रतिबिम्बशतैर्वृतः।
लङ्केश्वरः सभामध्ये न ज्ञातो वालिसूनुना॥

मीलितालङ्कारे एकेनापरस्य भिन्नस्वरूपानवभासरूपं मीलनं क्रियते सामान्यालङ्कारे तु भिन्नस्वरूपावभासेऽपि व्यावर्तकविशेषो नापलक्ष्यत इति भेदः। मीलितोदाहरणे हि चरणादेर्वस्त्वन्तरत्वेनाङ्कुरकं यावकादि न भासते सामान्योदाहरणे तु

लाक्षायारसो नालक्षि न ज्ञातः मल्लिकेति क्षौमं दुकूलमस्त्यासामिति क्षौमवत्यो धारिण्यः॥ इति मीलितं॥ ७९॥

सामान्यमिति लक्ष्यमित्यादिना अपरस्य लाक्षारसाऽभिसारिकादेः भिन्नरूपेति सुखपद्मादेर्भिन्नस्य स्वरूपस्यावभासेपीत्यर्थः।

उक्तमेवार्थमुदाहरणारूढतया विशदयति मीलितोदाहरणे

पद्मानां मुखानाञ्च व्यक्त्यन्तरतया भानमस्त्येव यथा रावणादेस्तस्य तत्प्रतिबिम्बानाञ्च । किन्त्विदं पद्ममिदं मुखमयं बिम्बोयं प्रतिबिम्ब इति विशेषः परन्नोपलक्ष्यते अतएव भेदतिरोधानान्मीलितं तदतिरोधानेपि साम्येन व्यावर्तकानवभासे सामान्यमित्युभयोरप्यन्वर्थता केचित्तु वस्तुद्वयस्य लक्षणसाम्यात्तयोः केनचिद्बलीयसा तदन्यस्य स्वरूपतिरोधाने मीलितं स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधाने सामान्यम् । एवञ्च ।

अपाङ्गतरलेदृशौ तरलवक्रवर्णा गिरो ।
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ॥
इति स्फुरितमङ्गके मृगदृशां स्वतोलीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥

स्त्रीत्यादिना वस्त्वन्तरत्वेन न भासत इत्यन्वयः तत्प्रतिबिम्बानाञ्च व्यक्त्यन्तरतया भानमस्त्येवेत्यनुषङ्गः॥ केचिदित्यस्यादुरित्यग्रिमेणान्वयः केचित् प्रकाशकारादयः तदुक्तं "समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते । निजेनागन्तुना वापि तन्मीलितमिति स्मृतमिति तयोर्मध्ये एवञ्चेत्यस्यत्यत्र मीलितालङ्कार इत्यग्रेतमेनान्वयः ।

अपाङ्गेति अपाङ्गस्तरलोयद्योस्ते तरलाः सवक्रोच्चारणात् वक्रा वक्रोक्तिगर्भाः वर्णा यासुताः गिरोवाक्यरूपा इति प्रकारेण

इत्यत्र मीलितालङ्कारः अत्र हि इक्कतारल्यादीनां नारी वपुषः सहजधर्मत्वान्मदोदयकार्यत्वाच्च तदुभय साधारण्यादुत्कृष्टतारल्यादियोगिना वपुषा मदोदयस्य स्वरूपमेव तिरोधीयते लिङ्गसाधारण्येन तज्ज्ञानोपायाभावात्। मल्लिकामालभारिण्य इत्यादिषु तु सामान्यालङ्कार इत्याहुः। तन्मते पद्माकर प्रविष्टानामित्यादौ भेदाध्यवसायेऽप व्यावर्तकास्फुरणेनालङ्कारान्तरेण भाव्यं सामान्यालङ्कारान्तरभेदेन वा पूर्वस्मिन्मते स्वरूपतिरोधानेऽलङ्कारान्तरेण भाव्यं मीलितावान्तरभेदेन वा॥ ८०॥

भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ।
हिमाद्रिन्त्वद्यशोमग्नं सुराः शीतेन जानते।
लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च॥

अगट्टग्रामङ्के लीलया स्वतः स्वभावात् स्फुरितं प्रकटीभूतन्तत् तस्मादन्वाङ्के कृतपदः कृतस्थितिः। भेदाध्यवसायेपीति मुख-पद्मयोर्भेदावभासेपीत्यर्थः व्यावर्तकस्फुरणेन हेतुना अलङ्कारान्तरेणेति स्वरूपातिरोधानेन मीलितासम्भवात् भेदातिरोधानेन च सामान्यस्याप्यसम्भवादिति भावः। सामान्येति तथाच गुणसाम्याद्विशेषाग्रहः॥ इति सामान्यालङ्कारः॥ सामान्य लक्षणं विशेषाग्रहश्च क्वचिद्भेदे गृह्यमाणे क्वचित्तु गृह्यमाणत्वाद्य प्रकारान्तर्गतिरत्र तन्मतेस्यादिति भावः

मीलितन्यायेन भेदानध्यवसाये प्राप्ते कुतोऽपि हेतोर्भेदस्फूर्तौ मीलितप्रतिद्वन्द्व्युन्मीलितं तथा सामान्यरीत्या विशेषास्फुरणे प्राप्ते कुतश्चित्कारणात् विशेषस्फूर्तौ तत्प्रतिद्वन्द्वी विशेषकः। क्रमेणोदाहरणद्वयं तद्गुणरीत्यापि भेदानध्यवसायप्राप्तावुन्मीलितं दृश्यते। यथा —

नृत्यद्भर्गाट्टहासप्रचुरसहचरैस्तावकीनैर्यशोभि-
र्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंह क्षितीन्द्र।
नेदृग्यद्येष नाभौ कमलपरिमलप्रौढिमासादयिष्य-
द्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः।

अवान्तरभेदेन वेत्यनन्तरभाव्यमित्यनुषज्यते पूर्वस्मिन्निति मीलितं यदि सादृश्यादित्यादि पूर्वोक्त चन्द्रालोक ग्रन्थतइत्यर्थः। स्वरूप तिरोधाने अपाङ्गतरल इत्यादि स्वरूपतिरोधानस्थले अलङ्कारान्तरेणेत्यादि स्वरूपतो ज्ञायमाने सादृश्याद्भेदाग्रहणं मीलितमित्यङ्गीकारे प्रथमः पक्षः सादृश्याद्भेदाग्रहणमित्येतावन्मात्र मीलित लक्षणाङ्गीकारेण द्वितीय इति भावः॥ इति सामान्यं भेदेति वैशिष्ट्यं वैजात्यं उन्मीलितं विशेषकञ्च क्रमेणालङ्कारो मन्नं ॥ ८० ॥

भेदाग्रहात्तदन्तर्गतं लक्षितानीति सङ्कुचितत्वादिति भावः सामान्यरीत्या सामान्यालङ्कारन्यायेन एवञ्च वैवल्यचातुर्य्य वचाम्बधूनां कर्णाग्रतो गण्डतलागतानि भृङ्गाः सहेलं यदि नापतिष्यन् कोवेदयिष्यन्नवचम्पकानीत्यपि विशेष

काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः।
वसन्तसमये प्राप्ते काकः काकः पिकः पिकः॥

इदं विशेषकस्योदाहरणं अत्र द्वितीयकाकपिक-शब्दौ काकत्वेन ज्ञातः पिकत्वेन ज्ञातः इत्यर्थान्तर-संक्रमितवाच्यौ।

यथा वा—

वाराणसीवासवतां जनानां
साधारणे शङ्करलाञ्छनेपि।
पार्थप्रहारव्रणमुत्तमाङ्गं
प्राचीनमीशस्य प्रकटीकरोति॥ ८१-८२॥

कोदाहरणं बोध्यं यत्त्वनुमानालङ्कारेणैव गतार्थत्वान्नानयोरल-ङ्कारान्तरत्वमिति तदयुक्तं उदाहृतस्थले भेदविशेषस्फूर्त्तौ विशेष दर्शनहेतुकप्रत्यक्षरूपत्वात् अथापि स्वकपोलकल्पितपरिभाष-याऽनुमानालङ्कारतां ब्रूषे तथापि सादृश्यमहिम्ना प्रागनवगतयो-र्भेदवैजात्ययोस्फुरणात्मना विशेषाकारेण मीलितसामान्यप्रति-द्वन्द्विनायुक्तमेवालङ्कारान्तरत्वम् अतद्गुणावज्ञयोरिव विशेषोऽत्र लङ्कारादित्यलं विस्तरेण॥ नृत्यदिति। नृत्यं कुर्वतो भर्गस्य हरस्य यो ऽट्टहासस्तत्प्रसरस्य विस्तारस्य समूहस्य वा सहचरैः सदृशैरित्यर्थः इह कीर्त्तिवक्कुलः एषः कमलाकामुकः नाभीकमलपरिमलस्य प्रौढ़िं समृद्धिं यदि नासादयिष्यन्नाधारयिष्यदित्यन्वयः। यत्तु-तद्गुणस्यात्रनिर्बाधकत्वात्कथं तत्प्रतिद्वन्द्वित्वमुन्मीलितस्येति तद-युक्तोपालम्भरूपत्वादुपेक्ष्यं तद्गुणेन भेदानध्यवसाय मात्रस्योक्तत्वात्॥

वाराणसीति। तृतीयलोचनादिचिह्ने साधारणेपि सतीत्य-

किञ्चिदाकूतसहितं स्याद्गूढ़ोत्तर मुत्तरं ।
यत्रासौ वेतसो पान्थ तत्रेयं सुतरा सरित् ॥

सरित्तरणमार्गं पृच्छन्त प्रति तं कामयमानाया उत्तरमिदं वेतसो कुञ्जे स्वाच्छन्द्यमित्याकूतगर्भम्।

यथा वा—

ग्रामेऽस्मिन् प्रस्तरप्राये न किञ्चित् पान्थ विद्यते ।
पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस ॥

आस्तरणादिकमर्थयमानं पान्थं प्रत्युक्तिरियम्। स्तनोन्नतिं दृष्ट्वा रन्तुमिच्छसि चेद्वस अविदग्धजन-प्रायेऽस्मिन् ग्रामे कश्चिदवगमिष्यतीत्येतादृशं प्रति-बन्धकं किञ्चिदपि नास्तीति हृदयम् इदमुन्नेय प्रश्नोदाहरणम् ॥ निबद्धप्रश्नोत्तरं यथा -

कुशलन्तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तं ।
पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति॥

न्वयः पार्थोऽर्जुनस्तेन क्षतोयः प्रहारस्तेन व्रणोयत्र तादृशमुत्त-माङ्गं शिरः पूर्वत्र स्वाभाविकगुणसाम्यम् इहत्वागन्तुकगुण-साम्यमितिभेदः ॥

॥इत्युन्मीलितविशेषकौ ॥ ८१—८२ ॥

किञ्चिदिति । किञ्चिदभिप्रायसहितं गूढ़मुत्तरं उत्तरं नामालङ्कारः । वेतसो वेतसलता। सुखेन तरितुं योग्या सुतरा। ग्राम इति प्रस्तरप्राये पाषाणबहुले पाषाणतुल्ये च प्रायोवा-

ईर्ष्यामानानन्तरमनुतप्तायाः नायिकायाः सखीमागतां प्रति तस्याः कुशलमिति नायकस्य प्रश्नः। जीवतीति सख्या उत्तरं। जीवन्त्याः कुतः कुशलमिति तदभिप्रायः। अन्यत्पृष्टमन्यदुत्तरमिति नायकस्य पुनः कुशलं पृच्छामीति प्रश्नः। पृष्टस्योत्तरमुक्तमित्यभिप्रायेण जीवतीत्युक्तमिति सख्यावचनं। सखीवचनस्याभिप्रायोद्घाटनार्थं पुनरपि तदेव कथयमीति नायकस्याक्षेपः। मृतां नु कथयामि या श्वसितीति स्वाभिप्रायोद्घाटनं। सति मरणे खलु तस्याः कुशलम्भवति मदागमनसमयेपि श्वासेषु सञ्चरत्सु कथं मृताङ्कथयेयमित्यभिप्रायः। प्रश्नोत्तरान्तराभिन्नमुत्तरञ्चित्र मुच्यते॥

के दारपोषणरताः? केखेटाः किञ्चलं? वयः। अत्र के दारपोषणरताः इति प्रश्नाभिन्नमुत्तरं केखेटाः। कुत्सितयोरिति कोशात् किञ्चिदाम्लतृणादिकं समागमप्रतिबन्धकञ्च पयोधरो मेघः स्तनश्च कश्चिदवगमिष्यति न्नास्यतीत्यादृशं इत्यादिरूपम् उन्नेयः कल्पाः प्रश्नेयेन तादृशस्योत्तरम्य।

ईर्ष्यामानेति। ईर्ष्याहेतुकमानेत्यर्थः अनुतप्तायाः पश्चात्तापयुतायाः प्रश्नोत्तरेति प्रश्नस्य उत्तरान्तरञ्च प्रश्नोत्तरान्तरे ताभ्यामभिन्नमुत्तरञ्चित्रमित्युच्यत इत्यर्थः।

केदारेति। 'केदाराणां पोषणे रता' के इति प्रश्नः केदारस्य क्षेत्रस्य पोषणे रता इति तदेवोत्तरं के· खेटाः खे आकाशे अटन्तीति प्रश्नस्य यदुत्तरं वयः पक्षिण इति तत्किं चलमिति प्रश्नस्य यद्

किञ्चनमिति प्रश्नद्वयस्थवय इत्येकमुत्तरं उदाहरणान्तराणि विदग्धमुखमण्डने द्रष्टव्यानि ॥ ८३ ॥

सूक्ष्मम्पराशयाभिज्ञे तरसा कृतचेष्टितं ।
मयि पश्यति सा केशैः सीमन्तमणिमाहृणोत् ॥

कामुकस्यावलोकनेन सङ्केतकालप्रश्नभावं ज्ञातवत्याश्चेष्टेयं अस्तङ्गते सूर्ये सङ्केतकालइत्याकूतं ।

यथा वा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
आसीन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥८४॥
पिहितं परवृत्तान्तं ज्ञातुः साकूतचेष्टितम् ।
प्रिये गृहागते प्रातः कान्तातल्पमकल्पयत् ॥

रात्रौ सपत्नीगृहे जागरणेन श्रान्तोसीति तल्पकल्पनाकृतं ।

त्तरान्तरं वयस्तारुण्यादीति तेनाभिन्नम् ॥ इत्युत्तरं ॥ ८३ ॥

सूक्ष्ममिति । पराशयाभिज्ञस्य इतरस्मिन् परविषये स्वाभिप्रायस्चेष्टितं सूक्ष्मालङ्कारः । पराशयाभिज्ञश्चासावितरश्च तस्य साकूतचेष्टितमर्थात्परविषयइति भावः ॥ सङ्केतेति । सङ्केतकाले मनोयस्य तज्जिज्ञासुमितियावत् विटञ्जारं नेत्राभ्यामर्पितमाकूतं यस्मिन् तादृशं लीलासम्बन्धि पद्मं नेत्रेत्यादिक्रियाविशेषणं वा ॥ इति लक्ष्म ॥ ८४ ॥

पिहितमिति। लक्ष्यनिर्देशः तल्पं शयनं वक्ष्यति वक्ष्ये प्रस्नवणशीलानां स्वेदबिन्दूनां प्रवन्धैर्धाराभिः कण्ठेभिन्नं लग्नं कुङ्कुमं

वक्त्रस्यन्दिस्वेदविन्दुप्रबन्धै-
र्दृष्ट्वाभिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गरेखां लिलेख ॥

अत्र स्वेदानुमितं पुरुषोचितखड्गलेखनेन प्रकाशितं ॥ ८५ ॥

व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनं ।

सखि पश्य गृहारामपरागैरस्मि धूसरा॥ अत्र चौर्यरत-कृत सङ्केतभूपृष्ठलुण्ठनलग्नधूलिजालस्य गोपनम् ।

यथा वा—

कस्य वा न भवेद्रोषः प्रियायाः सव्रणेऽधरे ।
सभृङ्गं पद्ममाघ्रासीर्वारितापि मयाधुना ॥

उपपतिना खण्डिताधरायाः नायिकायाः सकाश-मागच्छन्तं प्रियमपश्यन्त्येव सख्या नायिकां प्रति हितोपदेशव्याजेन तं प्रति नायिकापराधगोपनं छेका-

दृष्ट्वा क्वापि वयस्या सखी स्मित्वा स्मितङ्कृत्वा पुंस्त्वं व्यञ्जयती सती तन्व्याः पाणौ खड्गलेखां लिलेखेत्यन्वयः। सूक्ष्मालङ्कारे पराभिप्रायमवगत्य साकूतचेष्टितेनोत्तरसमर्पणं पिहितालङ्कारे तु गूढं परवृत्तान्तं साकूतचेष्टया तत्प्रकाशनमिति भेदोबोध्यः इति पिहितं ॥ ८५ ॥

व्याजोक्तिरिति । लक्ष्यनिर्देशः चौर्यरते कृतं यत्सङ्केतभूत-भूमिष्ठलुण्ठनमित्यन्वयः ।

उपपतिना जारेण तस्यां छेकापह्नुतौ आयान्तमिति प्रतोल्यां

पन्हुतेरस्यास्त्र यं विशेषः तस्यां वचनस्यान्यथानयनेनापन्हवः अस्यामाकारस्य हेत्वन्तरवर्णनेन गोपनमिति लक्षणे लक्ष्यनाम्नि चोक्तिग्रहणमाकारस्य गोपनार्थं हेत्वन्तरप्रत्यायकव्यापारमात्रोपलक्षणं। ततश्च –

आयान्तमालोक्य हरिं प्रतोल्या
माल्याःपुरस्ता दनुरागमेका।
रोमाञ्चकम्पादिभिरुच्यमानं
भामाजुगूह प्रणमन्त्यथैनम्॥

इत्यत्र'पि व्याजोक्तिरेव। तत्र ह्यनुरागकृतस्य रोमाञ्चाद्याकारस्य भक्तिरूपहेत्वन्तरप्रत्यायकेन प्रणामेन गोपनं कृतं सूक्ष्मपिहितालङ्कारयोरपि चेष्टितग्रहणमुक्तिसाधारणव्यापारमात्रोपलक्षणं।

ततश्च –

नलिनीदले वलाका मरकतपात्रइव दृश्यते शुक्तिः।
इति मम सङ्केतभुविज्ञात्वाभाव तदा ब्रवीदालीम्॥

इत्यादिष्वपि सूक्ष्मालङ्कारः प्रसरति अत्र श्लोके तावत्किमावयोः सङ्केतस्थानं भविष्यतीति प्रश्नाशयं सूचयति कामुके तदभिज्ञया विदग्धया तदा सखीं

रथ्यायां एका काचिद्भामा वनिता सख्याः पुरस्तात् रोमाञ्चकम्पादिभिरनुभावैर्व्यज्यमानमनुरागं एनं हरिं प्रणमन्ती सती जुगूह गोपितवती त्यन्वयः लक्ष्यते व्यज्यते।

प्रति साकूतमुक्तमिति सूक्ष्मालङ्कारो भवति यतोऽत्र वलाकायामरकतपात्रप्रतिष्ठितशुक्तुपमया तस्या निश्चलत्वेनाश्वस्तत्वं तेन तस्य प्रदेशस्य निर्जनत्वं तेन तदेवावयोः सङ्केतस्थानमिति कामुकं प्रति सूचनं लक्ष्यते। नचात्र ध्वनिराशङ्कनीयः दूरे व्यज्यमानस्यापि सङ्केतस्थानप्रश्नोत्तरस्य स्वोक्त्यैवाविष्कृतत्वात्।

एवं पिहितालङ्कारेप्युदाहार्यं द्रष्टव्यान्यदन्ववधेयं यत्रासौ वेतसीपान्थ्यत्यादिषु गूढोत्तरसूक्ष्मपिहितव्याजोक्त्युदाहरणेषु भावोन स्वोक्त्याविष्कृतः किन्तु वस्तुसौन्दर्यबलादृक्तबोद्धव्यविशेषितादृष्यः तत्रैव वस्तुतो नालङ्कारत्वं ध्वनिभावास्पदत्वात् प्राचीनैः स्वोक्त्याविष्करणे मत्यलङ्कारास्पदतास्तीत्युदाहृतत्वादस्माभिरप्युदाहृतानि शक्यं हि यत्रासौ वेतसी पान्थतत्रेयं सुतरां सरित्। इति प्रच्छन्नमध्यानं कामिन्याहस्सूचनं इत्याद्यर्थान्तर कल्पनयाभावाविष्करणमित्यतः प्राक् लिखितोदाहरणेषु सङ्केतकाल मनसं पुंस्त्रं तन्व्या व्यञ्जयन्ती भामानुगूहेति भावाविष्करणमस्ति तेष्वेव तत्तदलङ्कार इति ॥ ८६॥

एवमिति। सूक्ष्मालङ्कारवदुक्तिरूपव्यापारवर्णनमित्यर्थः उदाहर्तव्यमिति यथा वक्त्रस्यन्दीतिपद्यएव आलीम्बालां सस्मितं प्राह मन्दरुम्धाम्बित ामद्यपद्य।मिनायकमित्युत्तरार्धनिर्माणे

गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते।
वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः॥

यं प्रति किञ्चिद्वक्तव्यं तत्तटस्थैर्मा ज्ञायीति तदेव तदन्यं किञ्चित्प्रति श्लेषेणोच्यते चेत्सा गूढोक्तिः। वृषेत्याद्युदाहरणं परकलत्रं भुञ्जानं कामुकं प्रतिवक्तव्यं परक्षेत्रे सस्यानि भक्षयन्तं किञ्चिदुक्षाणं समीपे चरन्तं निर्दिश्य कथ्यते नेयमप्रस्तुतप्रशंसा कार्यकारणादिव्यङ्ग्यत्वाभावात् नापि श्लेषमात्रम प्रकृतार्थस्य प्रकृतार्थान्वयित्वेना विवक्षितत्वात्।

तस्य केवलं मतरञ्जनार्थं निर्दिष्टतया विच्छित्तिविशेषभङ्गावात्। –

नाथमित्युक्त्या प्रकाशनमिति बोध्यं वस्तुसौन्दर्यैत्यर्थः ध्वनिभावास्पदत्वात् ध्वनित्वाश्रयत्वात् उपसंहरति अत इति येष्वित्यस्य भावाविष्करणमस्तीत्यनेनान्वयः॥ इति व्याजोक्तिः॥ ८६॥

गुढोक्तिरिति। यदन्योद्देश्यकं वाक्यं तत्तदन्यं प्रति कथ्यते चेत् गुढोक्तिरलङ्कारः क्षेत्रं सस्यादेः कलत्रञ्च अपेहि दूरीभव अविवक्षितत्वादिति अयं भावः प्रकृताप्रकृतश्लेषेऽसावुदयमारूढ इत्यादावप्रकृतार्थस्य प्रकृतार्थोपमानतयान्वयः स्वीक्रियते सर्वथैव प्रकृतासम्बद्धस्या प्रकृतार्थस्य कथनेऽसम्बन्धार्थाभिधायकत्वापत्तेरतः प्रकृतेऽपि श्लेषवादिनाऽप्रकृतस्य प्रकृतसम्बन्धो वाच्यः स च न सम्भवति विवक्षाविरहादिति कुतस्तर्ह्यप्रकृतार्थकथनमत्राह।

तस्येति। अप्रकृतार्थस्येत्यर्थः ननु तादृशविवक्षाविरहेऽपि

यथावा—

नाथोमे विपणिं गतो न गणयत्येषा सपत्नी च मां
त्यक्ता मामिह पुष्पिणीति गुरवः प्राप्ता गृहाभ्यन्तरं।
शय्यामात्रसहायिनीं परिजनः भ्रान्तोन मां सेवते
स्वामिन्नागमलालनीयरजनीं लक्ष्मीपते रक्ष मां॥

अत्र लक्ष्मीपतिनाम्नोजारस्यागमनं प्रार्थयमाना-याश्तटस्थजनच्छलनाय भगवन्तं प्रत्याक्रोशस्य प्रत्यायनं विवृतोक्तिः॥ ८७॥

श्लिष्टगुप्तं कविनाविष्कृतं यदि
दृष्टापेहि परस्त्रीत्वादिति वक्ति ससूचनं॥

श्लिष्टगुप्तं वस्तु यथाकथञ्चित्कविनाविष्कृतं चेद्विवृतोक्तिः दृष्टापेहीत्युदाहृतौ पूर्ववद्गुप्तं वस्तु ससूचनमिति कविनाविष्कृतं॥

यथावा—

वत्से मागा विषादं श्वसनमुरुजवं संत्यजोर्ध्वप्रवृत्तं

नानार्थविन्यासमात्रेणास्तु श्लेष एवेत्याशङ्क्याह विच्छित्तिविशेषेति तथा च श्लेषसत्वेपि विच्छित्तिविशेषाद्गूढोक्तिरवश्यमङ्गीकार्येत्याशयः अतएव श्लेषमात्रमिति तन्मात्रनिराकरणमेवोपक्रान्तं नतु श्लेषनिराकरणमिति। नाथइति विपणिः पण्यवीथिका पुष्पिणी रजस्वला आगमेन वेदेन लालनीयः स्तुत्यः आगमनेन लालनीयस्य रजनीं व्याप्येत्यत्यन्तसंयोगे द्वितीया॥

॥ इति गूढोक्तिः॥ ८७॥

कम्पः कोवा गुरुस्ते किमिह बलभिदा जृम्भितेनात्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमुग्धः पयोधिः॥

इदं परवञ्चनाय गुप्ताविष्करणं ॥

त्रपागुप्ताविष्करणं यथा --

दृष्ट्या केशवगोपरागहृतया किञ्चिन्नदृष्टं मया
तेनेह स्खलितास्मि नाथ पतितां किन्नाम नालम्बसे।
एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरं ॥

अत्र कृष्णस्य पुरतो विषमे परिस्खलनमभिहितव-
त्यास्तत्कामयमानाया गोपिकाया वचने विषमपथि स्ख-
लनपतनत्राणसंप्रार्थनरूपेण झटिति प्रतीयमाने-

श्लिष्टगुप्तमिति । श्लिष्टेत्युपलक्षणं अर्थशक्तिमूलगुप्तस्यापि गच्छाम्यच्युतेत्यादौ संग्राह्यत्वात् वत्से इति वत्से लक्ष्मि विषादं खेदं हरस्व उरुजवं महावेगं ऊर्ध्वं प्रवृत्तं श्वसनं श्वासं पवनञ्च सन्त्यज कं जलमत्तीति तथा वरुणः कम्पश्च गुरुर्महान् बृहस्पतिश्च बलम्प्रसिद्धं तद्भिदा नाशकेन बलाख्यदैत्यनाशकेनेन्द्रेण च अत्र श्रीकृष्णसन्निधौ याहि इति प्रकारेण भयनिवारणव्याजेन सु-राणां प्रत्याख्यानं वर्जनं कारयित्वा मन्थो मन्थनं तेन मुग्धः पयोधिर्यस्मै लक्ष्मीमदात्स वो दुरितं दहत्वित्यन्वयः। परेति पर-वञ्चनाय गुप्तस्याविष्करणमित्यर्थः ।

नार्थेन गुप्तं विवक्षितमर्थान्तरं सलेशं ससूचनमित्यनेनाविष्कृतं॥

एवं नैषधादिषु चेतोनलं कामयते मदीयमिति दमयन्तीवाक्यादिकमप्युदाहरणं। इदं शब्दशक्तिक्रोड़ीकृतगुप्ताविष्करणं॥

अर्थशक्तिमूलगुप्तार्थाविष्करणं यथा—

गच्छाम्यच्युतदर्शनेन भवतः किं तृप्तिरुत्पद्यते
किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः॥

अत्र गच्छाम्यच्युतेत्यामन्त्रणेन त्वया रन्तुं कामेच्छया स्थितं तन्न लब्धमित्यर्थशक्तिलभ्यं वस्तु तृतीयपादेनाविष्कृतं॥ सर्वमेतत् कविनिबद्धवक्तृगुप्ताविष्करणोदाहरणं।

कविगुप्ताविष्करणं यथा

सपेति। लज्जया गुप्तस्येत्यर्थः॥ दृष्टेति गोपे त्वयि योराग आसक्तिस्तद्धतया अपहृतया गवाम्परागैर्धूलिभिर्व्याप्तया च गोपेति सम्बोधनं वा किञ्चित्समविषमयुक्तायुक्तञ्च इह त्वयि भूमौ च पत्युर्भावः पतितां पतनं प्राप्ताञ्च विषमेषुः पञ्चशरस्तेनखिन्नमनसां विषमेषु सङ्कटेषु खिन्नमनसाञ्च अबलानां स्त्रीणां बलरहितानाञ्च सलेशं ससूचनं गोष्ठं गोस्थानं।

सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां
दूरादेव विवर्जिताः सुरभयः स्रग्गन्धधूपादयः ।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद्भवन्ति दयिते सर्वा ममान्धा दिशः ॥

अत्र तावदीर्ष्यामानकलुषितदयिताप्रसादनव्यापारविधिः प्रतीयते । दृष्टिरोगार्त्तस्य दृष्टिं प्रतरागक्रोशोविवक्षितार्थः स च दृष्टे इत्यस्य पदस्य लग्नोच्चारणेन सम्बुद्धिरूपतामवगमय्याविष्कृतः ॥ कविनिबद्धवक्तृगुप्तं परवञ्चनार्थं कविगुप्तं स्वप्रौढ़िकथनार्थमितिभेदः ॥ ८८ ॥

चेतोनलमिति । लङ्काश्च अयतं न गच्छतीत्यर्थेन लङ्कामयते इच्छतीत्यर्थोगुप्तः तदाविष्कारणञ्च क्षीणा दृष्टा चेत्यनेनेति बोध्यं ॥ शब्दशक्तीति शब्दस्य प्रवर्गेनेत्यर्थः ओड़ीकृतः संग्रहीतः॥ गच्छाम्येति । अच्युतमद्विषये अस्तलितेति गुप्तार्थं चिरकालं त्वद्दर्शनेनापि न तृप्तिरित्यर्थेन दर्शनेन न तृप्तिरपितु सम्भोगेनेत्यर्थो गुप्तः वि जनस्थयोरेकान्तगतयोः इतश्चासौ जनः अन्यथारत्यर्थं स्थिताविति सम्भावयति तेन द्वयोरकीर्त्तिर्जातैव वृथैवात्मानं वञ्चयामः॥ इति गुप्तार्थः आमन्त्रणस्याच्युतेत्यादेर्भङ्ग्या रचनया सूचितोयो वृथावस्थानखेदस्तेनालसाङ्गविनिवद्धेति कविनिबद्धेन वक्त्रा गुप्तस्येत्यर्थः। सुभ्रुत्वमिति। शोभनभ्रूर्दयिता दृष्टिश्च तयोः सम्बोधनं कोपोरोषः विकारश्च रागिण्यनुरागिणीति अवनते नम्रे इति च मयीत्यस्य विशेषणं पक्षे रागिणि रक्तिमशीले

युक्तिः परातिसन्धानं क्रियया मर्मगुप्तये।
त्वामालिखन्ती दृष्ट्वान्यं धनुः पौष्पं करे लिखत्॥

अत्र पुष्पचापलेखनक्रियया मन्मथोमयालिखित इति भ्रान्त्युत्पादनेन स्वानुरागरूपमर्मगोपनाय परवञ्चनं विवक्षितं॥ यथा वा—

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसन्निधौ निगदतस्तस्यातिमात्रं वधूः।
कर्णालम्बितपद्मरागसकलं विन्यस्य चंचूपुटे
व्रीडार्त्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनं॥

अत्र शुकवाङ्मुद्रणाया तन्मुखेन स्वकीयरहस्यवचनशुश्रूषुजनवञ्चनं कृतं॥ व्याजोक्तावाकारगोपनं युक्तौ तदन्यगोपनमितिभेदः॥

---

नन्वित्ति इति हक् सम्बोधनं एवं दृष्टे इत्यपि उच्चारणेनेति स्वरविशेष सहकृतोच्चारणेनेत्यर्थः॥ इति विवृतोक्तिः॥८८॥

युक्तिरिति। स्वस्य मर्मगोपनाय क्रियया यत्परस्यातिसन्धानं वञ्चनं सा युक्तिरलङ्कारः॥ त्वामिति। नायकं प्रतिदूतीवचनं पुष्पस्येदं पौष्पं दम्पत्योरिति तस्य शुकस्य अतिमात्रं अत्यर्थंनिगदत इति सम्बन्धः। फलशब्दो बीजपरः गोपनीयविषयभेदस्य विच्छित्तिभेदाप्रयोजकत्वादाह।

यद्वेति। नन्वेवं सत्याया तमालोक्येत्यादौ व्याजोक्तिरेवेति प्रागुक्तं विरुध्येतेत्याशङ्क्याह एवञ्चेति॥ यद्वेति। पश्चाङ्गीकारेचे-

यद्वा व्याजोक्तावुक्त्यागोपनमिह तु क्रियया गोपनमिति भेदः। एवञ्च आयान्तमालोक्य हरिं प्रतोल्यामिति श्लोकेऽपि युक्तिरेव ॥ ८९ ॥

लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते।

सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥

अत्र लोचने मीलयित्वेति लोकवादानुकृतिः॥ यथा वा मदीये वरदराजस्तवे—

नामैव ते वरद वाञ्छितदातृभावं
व्याख्यात्यतो न वहसे वरदानमुद्राम्।
विश्वप्रसिद्धतरविप्रकुलप्रसूते
र्यज्ञोपवीतवहनं हि न खल्वपेक्ष्यम् ॥

अत्रोत्तरार्द्धं लोकवादानुकारः ॥ ९० ॥

छेकोक्तिर्यदि लोकोक्तेः स्यादर्थान्तरगर्भिता।
भुजङ्ग एव जानीते भुजङ्गचरणं सखे ॥

त्यर्थः एवञ्च पूर्वं ग्रन्थ आद्य पक्षाभिप्रायेणेति भावः ॥ इति युक्तिः ॥ ८९ ॥

लोकेति। अनुकृतिरनुकरणं सहस्वेति अर्थाद्विरहं मासानभिव्याप्येत्यर्थः।

नामैवेति। हे वरद तव नामैव वाञ्छितदातृत्वमाख्याति कथयति अतस्त्वं वरदानमुद्रामितरदैवतवन्न धारयसि यतो

केनचित् कस्यचित् वृत्तान्तं पृष्टस्य समीपस्थमन्यं निर्दिश्यायमेव तस्य वृत्तान्तं जानातीत्युक्तवतोयमहः पादानहरेव जानातीति लोकवादानुकारः॥ अत्र स चायं च लोकश्चिदिते धनार्जनादिव्यापारे सहचारिणाविति विदितविषयतया लोकोक्त्यनुवादस्य प्रयोजने स्थिते रहस्येप्यनंगव्यापारे तस्यायं सहचरइति मर्मोद्घाटनमपि तेन गर्भीकृतं॥

यथावा—

मलयमारुतां व्राता याता विकसितमल्लिका
परिमलभरोभग्नोग्रीष्मस्त्वमुत्सहसे यदि।
घनघटयन्त त्वन्निःस्नेहं यएव निवर्तने
प्रभवति गवां किन्नश्छिन्नं सएव धनञ्जयः॥

अत्र धनलिप्सयाप्रोषिताङ्गनासखीवचने यएवगवां निवर्तने प्रभवति सएव धनंजय इतयान्यजातिप्रसिद्धलोकवादानुकारः॥

विश्वप्रसिद्धतरे विप्रकुले प्रसतिरुत्पत्तिर्यस्य तादृशस्येत्यर्थः॥

॥ इति लोकोक्तिः ॥८०॥

छेकोक्तिरिति। लक्ष्यनिर्देशः अर्थान्तरगर्भिता अर्थान्तरव्यञ्जकता समीपस्थं यद्वृत्तान्तः पृष्ठस्तत्समीपस्थं सचायश्चेति पृच्छमानवृत्तान्तस्तत्समीपस्थयेत्यर्थः तेन लोकोक्त्यनुवादेन।

मलयेति। व्राताः समूहाः याताः गताः विकासिनां मल्लिका

अत्रातिसौन्दर्यशालिनीमिमामपहाय धनलिप्सया प्रस्थितोरसानभिज्ञत्वात् गोप्राय एव तस्य निवर्तकस्तु धनस्य जेता धनेनाकृष्टस्य तद्विमुखीकरणेन प्रतरा-क्षेपकत्वादितरर्थांतरमपिगर्भितं ॥९१॥

वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनं ।
मुञ्चमानं दिनं प्राप्तं मामुञ्च हनन्दी हरान्तिके॥

अत्र मानं मुञ्च प्रयाता रात्रिरित्याशयेनोक्तायां वाचि नन्दिनं प्राप्तं मा मुञ्चेतरर्थान्तरं श्लेषेण परि-कल्पितं ॥

यथावा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥

इदमविकृतश्लेषोक्तेरुदाहरणं ॥ विकृतश्लेषोक्ता

कुसुमानां परिमलस्य भरो यस्मिन् तादृशो ग्रीष्मो भग्नो नष्टः हे घन त्वं यद्युत्सहसे उत्साहवान् भवसि तदा तन्निःस्नेहं नायकं घटय अनया सह संयोजय गवां निवर्त्तने पराहृतानां व्याव-र्तने य एव प्रभवति स एव धनञ्जयोऽर्जुन इत्यन्वयः लिप्सया प्रो-षितस्य याङ्गना तत्सखीवचन इति सम्बन्धः आन्ध्रास्तैलङ्गाः। इमां मत्सखीं गोप्रायोगोतुल्यः ॥ इति छेकोक्तिः ॥ ९० ॥

वक्रोक्तिरिति काकुर्ध्वनिविकारः अपरार्थस्य अभिप्रेतादर्थादर्था-न्तरस्य नन्दीहरस्य गण विशेषः दारुणाक्रूरेत्यभिप्रेतं काष्ठेनेति कल्पनं विकृतत्वञ्च कस्यचिद्वर्णस्यावापोद्वापाभ्यां भवितीति सो-

यथा

भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना
स ते रामः स्थाता न युधि पुरतोलक्ष्मणसखः।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः॥
सर्वमिदं शब्दश्लेषमूलाया वक्रोक्तेरुदाहरणं॥
अर्थश्लेषमूलाया वक्रोक्तिर्यथा —

भिक्षार्थी स क्व यातः सुतनु बलिमखे ताण्डवं क्वाद्य भद्रे
मन्ये वृन्दावनान्ते क्व नु स मृगशिशुर्नैव जाने वराहं।
बाले! कच्चिन्न दृष्टोजरठवृषपतिर्गोप एवास्य वेत्ता
लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः॥

सताम्प्रति रावणोक्तिः पादत्रयं चतुर्थस्तम्प्रति सीतायाः ते तव पतिः स रामो युधि सङ्ग्रामे पुरतोग्रतो न स्थाता स्थास्यतीत्यर्थः। अतिशयेन लघु लघिष्ठ तत्सम्बोधनं इदं पादत्रयं षष्ठाक्षरात्पराणां समग्रमानाञ्चिन वीतिवर्णानां विलोपोयत्र तादृशं पुनः पठेत्यर्थः शब्दश्लेषेति शब्दस्य परिवृत्य सहत्वादिति भावः॥ भिक्षेति जल-निधिश्च हिमवांश्च तत्कन्ययोः लक्ष्मीपार्वत्योः क्रमेण इत्थं लीलया संलापोमिथो भाषणं नोस्मान्त्रायतामित्यन्वयः। इत्थङ्कौ-तुकादाह—भिक्षार्थीति हरमभिप्रेत्य लक्ष्म्या वाक्यं बलेर्दैत्यस्य मखेयज्ञ इति वामनाभिप्रायं पार्वत्याः भद्रे शोभने ताण्डवं नृत्य-मद्य क्व वर्त्तत इति लक्ष्मीप्रश्नस्योत्तरं वृन्दावनस्यान्ते मध्ये इति श्रीकृष्णाभिप्रायं मृगशिशुः महादेवेन करे धृतः परशुमृगवरा-

काका यथा—

असमालोच्य कोपस्ते नोचितोऽयमितीरिता ।
नैवोचितोऽयमिति तं ताडयामास मालया ॥

अत्र नैवोचित इति काकुस्वरविकारेणोचित एवेत्यर्थान्तरकल्पनं ॥९२॥

स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनं ।
कुरङ्गैरुत्तरंगाक्षैः स्तब्धकर्णैरुदीक्ष्यते ॥
तौ सम्मुखप्रचलितौ सविधे गुरूणां
मार्गप्रदानरभसस्खलितावधानौ ।
पार्श्वोपसर्पणमुभावपि भिन्नदिक्कं
कृत्वा मुहुर्मुहुरुपासरतां सलज्जं ॥९३॥

भीतिस्त्वं प्रसन्नमितिध्यानश्रवणात् इदं लक्ष्म्या वाक्यं नैवेति पार्वत्याः मृगः पशो कुरङ्गेति विघ्नः कश्चिदिति प्रश्ने जरठो जीर्णः वृषपतिर्वृषश्रेष्ठ इति हरवृषभाभिप्रायं लक्ष्मीवाक्यं गोपो गवां पालक इति कृष्णाभिप्रायमुत्तरमिति अत्रभिक्षादि पदानां परिवृत्तिसहत्वादर्थश्लेषमूलत्वं ।

असमालोच्येति अविचार्येत्यर्थः मालया पुष्पमालया ॥ इति वक्रोक्तिः ॥ ९२ ॥

स्वभावोक्तिरिति लक्ष्यनिर्देशः जात्यादिस्थस्य जात्यादि सम्बन्धिनः आदिपदेन क्रियादिपरिग्रहः उत्तरश्लोकेऽपि तरङ्गाय माणाम्यक्षीणि येषान्तैः ।

ताविति तौ प्रकान्तौ वधूवरौ गुरूणां समीपे अन्योन्याभि-

भाविकं भूतभाव्यार्थसाक्षात्कारस्य वर्णनं।
अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः॥
स्थानभीषणत्वोद्भावनपरमिदं।
यथा वा—
अद्यापि तिष्ठति दृशोरिदमुत्तरीयं
धर्तुं पुरस्तनतटात् पतितं प्रवृत्ते।
वाचं निशम्य नयनं नयनं ममेति
किञ्चित्तदा यदकरोत् स्मितमायताक्षी॥९४॥

सुखं प्रचलितौ परस्परस्य मार्गप्रदानयोरभसोवेगस्तेन स्खलितं भ्रष्टमवधानं सावधानत्वं ययोस्तादृशौ उभावपिभिन्नदिक्कं वाम दक्षिणरूपदिक्सम्बन्धिपरस्परपार्श्वभागोपसर्पणं मुहुर्मुहुः कृत्वा सलज्जं यथास्यात्तथोपसरतां उपसर्पणञ्चक्रतुरित्यर्थः पूर्वोदाहरणे कुरङ्गजातिस्वभाववर्णनं अत्र सलज्जक्रियया स्वभाववर्णनमितिभेदः॥ इति स्वभावोक्तिः॥ ९३॥

भाविकमिति लक्षनिर्देशः। अद्यापीति मम नयनं नयममिति तस्या वाचं निशम्य स्तनतटात्पतितमुत्तरीयं धर्तुं पुरः प्रवृत्ते मयि सति तदा आयताक्षी यत्किञ्चित्स्मितमकरोत्। इदमद्यापि मम दृशोः पुरस्तिष्ठतीत्यन्वयः अत्र नयनपदेन स्ववाचकत्वरूपशक्यसम्बन्धेन नेत्रपदं लक्ष्यते तस्माच्च वस्त्रप्रतीतिः किं वा स्ववाचकवाच्यत्वं रूपशक्यसम्बन्धेन वस्त्रमेव लक्षयतीति वचोवार्थैरित्यादिवल्लक्षितलक्षणा वा बोध्या नेत्रं पथि गुणे वस्त्र इति मिश्रः॥ इति भाविकं॥ ९४॥

उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम्।
सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः॥
इदं श्लाघ्यचरितस्यान्याङ्गत्वे उदाहरणम्।
ऋद्ध्युदाहरणं यथा—
रत्नस्तम्भेषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः॥९५॥
अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम्।
त्वयि दातरि राजेन्द्र! याचकाः कल्पशाखिनः॥
इयमौदार्यात्युक्तिः॥
शौर्यात्युक्तिर्यथा—
राजन्! सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः।
पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः॥

उदात्तमिति ऋद्धेः समृद्धेश्चरितं उदात्तालङ्कारः तथा-श्लाघ्यचरितं अन्यस्योपलक्षणमङ्गञ्चेत्तदपि तथा सानौ शिखरे यस्य पर्वतस्य किरीटी अर्जुनः कृच्छ्रात्कष्टात् आञ्जनेयेन हनूमता॥ इत्युदात्तं॥९५॥

अत्युक्तिरिति लक्षणनिर्देशः अद्भुतञ्च तदतथ्यं मिथ्या रूपं अकूपाराः समुद्राः आद्युरिति स्वमतेतुलथ्यत्वातथ्यत्वाभ्यां भेद इति भावः। अतथ्यं अद्भुतत्वविशिष्टस्यरूपं दर्शयति अनयोरित्यादि एतत्पक्षं योगेप्ययोगोऽसम्बन्धातिशयोक्तिरित्यत्र प्रागुदाहृतं असदुक्तितारस्थेति अनयोरित्यसदुक्तिमान्।

सम्पदत्युक्तावुदात्तालङ्कारः। शौर्यात्युक्तावत्युक्त्य-लङ्कारइति भेदमाहुः ।

अनयोरनवद्याङ्गि ! स्तनयोर्जृम्भमाणयोः ।
अवकाशोनपर्याप्तस्तव बाहुलतान्तरे ॥
अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।
इदमेवंविधं भावि भवत्याः स्तनमण्डलमिति
सदसदुक्तितारतम्येनातिशयात्युक्त्योर्भेदः ॥८६
निरुक्तिर्योगतोनाम्नामन्यार्थत्वप्रकल्पनं ।
ईदृशैश्चरितैर्जाने सत्यं दोषाकरोभवान् ॥

अल्पमिति पद्ये त्वत्यन्तासदुक्तिरिति तारतम्येनेत्यर्थः तथा चाद्य इति विशेषणादत्यन्तातथ्यरूपत्वलाभान्नातिशयोक्तावति व्याप्तिरिति भावः अतएवानयोरितिपद्यानन्तरं दण्डिनोक्तं इति सम्भाव्यमेवैतद्विशेषाख्यानसंस्कृतमिति एवं लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः योर्थस्तेनातितुष्यन्ति विदग्धा-नेतरे यथेत्युक्ता अल्पं निर्मितमित्याद्युदा हृत्य इदमत्युक्तिरित्युक्त-मिति च ॥ इत्यत्युक्तिः ॥ ८६ ॥

निरुक्तिरिति । लक्ष्यं योगवशान्नाम्नामर्थविशेषाभिधायिना-मर्थान्तरोपवर्णनमिति । लक्षणं—ईदृशैरिति । चन्द्रं प्रति विर-हिण्या उक्तिः । ईदृशैर्जनसन्तापनरूपैः दोषाया रात्रेः कर्त्ता दोषाणामाकरश्च ।

पुरेति कनिष्ठकाङ्गुलिविशेषः अधिष्ठितः कालीदासो यस्यां

यथावा—

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥

प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनं।

न द्यूतमेतत्कितवक्रीडनं निशितैः शरैः

निर्णीतोनिषेधःस्वतोनुपयुक्तत्वादर्थान्तरं गर्भीकरोति तेन चारुतान्वितोयं प्रतिषेधनामालङ्कारः॥ उदाहरणं युद्धरङ्गे प्रत्यवतिष्ठमानं शाकुनिकं प्रति विदग्धवचनं। तत्र युद्धस्याद्यूतत्वाभावोनिर्णीतएव कीर्त्यमानस्तत्रैव तत्र प्रागल्भ्यं न युद्धे व्युत्पत्तिगन्धोऽस्तीत्युपहासं गर्भीकरोति तच्च कितवेत्यनेनाविष्कृतं॥

यथावा—

न विषेण न शस्त्रेण नाग्निना न च मृत्युना।
अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः॥

अत्र स्त्रीणां विषादिनिर्मितत्वाभावः प्रसिद्धएव कीर्त्यमानस्तासां विषाद्यतिशायि क्रौर्यमिति अमुमर्थं व्यक्तीकरोतीति स चाप्रतीकारपारुष्या इति प्रतीकारवद्भ्योविषादिभ्यस्तासां विशेषणेनाविष्कृतः॥

सा मध्यमाङ्गुलिविशेषरूपा अर्थवती न विद्यते कवि नाम यस्या इत्यन्वर्थनामवती। इति निष्कृतिः। ८७।

कितवोद्यूतकृत् धूर्तौ च—देवी कितव इत्यमरः। ननु

सिद्धस्यैव विधानं यत्तदाहुर्विध्यलङ्कृतिं।
पञ्चमोदञ्चने काले कोकिलः कोकिलोभवेत्॥

निष्पातविधानमनपयक्तिवाधितं सदर्थान्तरगर्भीकरणेन चारुतरमिति तं विधिनामानमलङ्कारमाहुः। उदाहरणे कोकिलस्य कोकिलत्वविधानमनुपयुक्तं सदतिमधुरपञ्चमध्वनिशालितया सकलजनहृद्यत्वं गर्भीकरोति। तत्र पञ्चमोदञ्चने इति कालविशेषणेनाविष्कृतं।

यथावा—

हे हस्त! दक्षिणमृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणं।
रामस्य गात्रमसि निर्भरगर्भखिन्न
सीताविवासनपटोः करुणा कुतस्ते॥

अत्र रामस्य गात्रमसीतिवचनमनुपयुक्तं सद्रामस्य-

प्रसिद्धानुवादस्याचमत्कारित्वात्कथमलङ्कारत्वमत आह—निष्पात इत्यादि। शकुनेः पाशकैर्दीव्यतीतशाकुनिकः पाविष्कृतमितिध्वनित्वशङ्कानिवारं एवमग्रेपि॥ इति प्रतिषेधः॥ ९८॥

पञ्चमस्य स्वरविशेषस्योदञ्चनमाविष्करणं यत्र तादृशे काले कोकिलः कोकिलो मधुरध्वनिरभवदित्यर्थः द्वितीय कोकिलपदस्यानुपयुक्तार्थत्वे सर्थान्तरे सङ्क्रमितत्वात् सकलजनहृद्यत्वप्रतीतिश्च प्रयोजनं एवञ्च शालितयेत्यनन्तरं लक्षितयेति शेषो बोध्यः पूर्ववत् ध्वनित्वाशङ्कानिवारणाय तथेत्याद्युक्तं।

त्यनेन स्वस्यात्यन्तनिष्करुणत्वं गर्भीकरोति । तत्र निर्भरेत्यादिविशेषणैराविष्कृतं । यद्यप्यनयोर्विधिनिषेधयोरुदाहरणेषु व्यङ्ग्यान्यर्थान्तरसंक्रमितवाच्यरूपाणि तथापि न ध्वनिभावास्पदानि स्वोक्त्यैव व्यङ्ग्यविशेषाविष्करणात् । व्यंग्याविष्करणे चालङ्कारत्वमेवेति प्राक् प्रस्तुताङ्कुरप्रकरणे व्यवस्थितत्वात् पूर्वं बाधितौ प्रतिषेधौ आक्षेपभेदत्वेनोक्तौ इह तु प्रसिद्धौ विधिप्रतिषेधौ तत्प्रतिद्वन्द्विनावलङ्कारत्वेन वर्णिताविति भेदः ॥९९॥

हे हस्तेति । शूद्रतपस्याजनिताधर्मवशात् पूर्णायुषि द्विजबालके मृते तज्जीवनाय तस्य रामस्य स्वहस्तं प्रति इयमुक्तिः जीवातो जीवनाय शूद्रएव तपश्चरणान्मुनिरिव मुनिः तस्मिन् कृपाणं खड्गं विसृज निक्षिप यतो रामस्याकरुणस्य गात्रं शरीरमसि निर्भरमतिशयेन गर्भखिन्नायाः सीतायाः प्रवासनं निवासनं तत्र पटोर्दक्षस्येत्यर्थः अत्र रामपदमकरुणत्वरूपार्थान्तरसंक्रमितं तदतिशयो व्यङ्ग्यः स चात्यन्तमित्यनेनोक्तः ध्वनिभावास्पदानि ध्वनित्वप्रयोजकानि ॥ व्यवस्थितत्वादिति । शब्दार्थशक्त्याऽक्षिप्तोपि व्यङ्ग्योर्थः कविना पुनः यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेरिति ध्वनिकारवचनेन निर्णीतत्वादित्यर्थः ॥ उक्ताविति । निषेधाभासमाक्षेपं बुधाः केचन मन्वते आक्षेपोन्यो विधौ व्यक्ते निषेधे च तिरोहिते इत्येताभ्यां नाहं दूती गच्छ गच्छसीत्युदाहरणौ प्रतिपादिताविर्त्यर्थः प्रसिद्धत्वमबाधितप्रतिद्वन्द्वित्वं ।

॥ इति विधिः ॥ ९९ ॥

हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवां ॥

यथा वा

एष ते विद्रुमच्छायो मरुमार्ग इवाधरः ।
कस्य नोतनुते तन्वि । पिपासाकुलितं मनः ॥

मानेनेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते ।
तृष्णे । त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना॥
यत्स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते

॥ इत्युदाहरणं ॥१००॥

हेतुहेतुमतोरैक्यं हेतुं कश्चित्प्रचक्षते ।

हेतोरिति हेतुमता कार्येण मानच्छेदः कार्यं । एष इति । विद्रुमच्छायः प्रवालकान्तिः विगततरुच्छायश्च मरुर्निर्जलदेशः ।

मानेइति । मानेनेच्छति अनिच्छति सति एवमुपशम मेव-वारयति सति क्ष्मियां लज्जायांक्ष्मामभिमालिखन्त्यां भूम्युल्लेखनस्य तदनुभावत्वात् स्वातन्त्र्ये च परिवृत्य पराङ्मुखो भूय तिष्ठति सति धैर्यंकरौ व्याधूयममनानुमतमिति सूचनाय हस्तधूननं कृत्वा गते सति हे तृष्णे त्वामनुसरतामुना जनेनेतावत्फलं प्राप्तं यत्पादेनापि योनस्पृष्टः स एव चरणौ स्वीयौस्प्रष्टुं न सम्यक्मन्यते अनुजानातीत्यन्वयः अत्र तृष्णारूपहेतुतत्कार्ययोः स्पष्टमभिधानं भेदान्तरमाह । हेतुहेतुमतोरिति । केचित् भट्टो-द्भटप्रभृतयः तदुक्तं हेतुमता सहहेतोरभिधानमभेदतो हेतु-

लक्ष्मीविलासा विदुषां कटाक्षा वेंकटप्रभोः ॥

अत्र च कार्यावश्यम्भावतच्छैघ्र्यादिप्रत्यायनार्थः कार्यकारणाभेदव्यपदेशः।

यथावा—

आयुर्दानमहोत्सवस्य विनतक्षौणीभृतां मूर्त्तिमान्
विश्वासोनयनोत्सवोमृगदृशां कीर्त्तेः प्रकाशः परः।
आनन्दः कलिताकृतिः सुमनसां वीरश्रियोजीवितं
धर्म्मस्यैष निकेतनं विजयते वीरः कलिङ्गेश्वरः॥

अत्र दानमहोत्सवायुष्करत्वादिनाध्यवसिते राज्ञि तदायुष्ट्वादिव्यपदेशः।

इत्थंशतमलङ्कारा लक्षयित्वा निदर्शिताः।
प्राचामाधुनिकानाञ्च मतान्यालोच्य सर्वतः ॥१॥

रिति लक्ष्मीति कटाक्षाः विदुषां लक्ष्मीविलासा इत्यन्वयः। अत्र विलास हेतोर्विलासाभिन्नत्वेनाभिधानं एवम्विध लक्षणायाः प्रयोजनमाह अत्रेति कार्यावश्यम्भावश्च तच्छैघ्र्यञ्चेति विग्रहः आदिना अपथ्याशनं रोग इत्यादौकार्य्यगतोपादेयत्वानुपादेयत्वादि संग्रहः आयुरिति वीरः कलिङ्गेश्वरः कलिङ्गदेशाधिपो विजयत इत्यन्वयः कीदृशः दानरूपस्य महोत्सवस्य आयुरिति कार्य्याभिन्नत्वेनाभिधानं एवमग्रेपि विशेषेण नतानां क्षोणीभृतां राज्ञां कलिताकृतिः धृताकारः वीरश्रियः वीरलक्ष्म्याः निकेतनं स्थानं इति।

॥ हेत्वलङ्कारः॥

रसभावतदाभासभावशान्तिनिबन्धना:।
चत्वारोरसवतप्रेयऊर्जस्विच्चसमाहितं ॥ २ ॥
भावस्य चोदय: सन्धि: शबलत्वमितित्रय:।
अष्टौ प्रमाणालङ्कारा: प्रत्यक्षप्रमुखा: क्रमात्॥३॥
एवं पञ्चदशान्यानप्यलङ्कारान्विदुर्बुधा:।

तत्र विभानुभावव्यभिचारिभिर्व्यञ्जितोरतिहास-शोकोरस: स यत्रपरस्याङ्गभवतितत्ररसवदलङ्कार:। विभावानुभावाभ्यामभिव्यञ्जतोनिर्वेदादिस्त्रयस्त्रिंशद्-दोदेवता गुरुशिष्यद्विजपुत्रादावभिव्यज्यमानारतिश्च भाव: सयत्रापरस्याङ्गंसप्रेयोऽलङ्कार:।

अनवित्येन प्रवृत्तोरसोभावश्च रसाभासो भावाभा-सश्चेतुच्यते सयत्रापरस्याङ्गंतदूर्जस्वित् भावस्यप्रशाम्य

भावस्येति निर्वेदादेर्व्यभिचारिभावस्येत्यर्थ: प्रत्यक्ष प्रमुखा: प्रत्यक्षाद्या: ते च प्रत्यक्षानुमानोपमानशब्दार्थापत्यनुपलब्धिसम्भवै तिह्याख्या: विभावेत्यादि रत्यादेरालम्बनोद्दीपनरूपाणि नायिकाचन्द्रोदयादीनि कारणानि काव्ये वर्ण्यमानानि विभा-वयन्तीति व्युत्पत्त्याविभावपदेनाभिधीयन्ते कार्याणि च क-टाक्षरोमाञ्चादीनि तथा विधान्येवानुभावयन्तीति व्युत्पत्यानु-भावपदेन एषामेव कार्याणां रत्यादिनोत्पादने कर्तव्ये सह-कारि भूतान्युत्कण्ठादीनि च व्यभिचारिपदेन विशेषादभित: समन्तत: ये स्थायिनञ्चारयन्तीति व्युत्पत्ते: एवं रतिरासक्तानु-रागादि पर्यायबोध्यान्त:करणवृत्ति: विकृतविदूषिकादिचेष्टा

दवस्थाभावशान्तिः तस्याः पराङ्गत्वे समाहितं भावस्योद्गमावस्थाभावोदयः द्वयोर्विरुद्धयोर्भावयोः परस्परस्पर्धाभावसन्धिः बहूनां भावानां पूर्वपूर्वोपमर्द्दनोत्पत्तिर्भावशबलता एतेषामितराङ्गत्वे भावोदयादयस्त्रयोलङ्कारः तत्ररसवदुदाहरणं।

दर्शन जन्या चित्तस्य विकासरूपावृत्तिर्हासः। इष्टनाशानिष्टलाभादि जन्याचित्तवृत्तिः शोकः प्रसिद्धः आदिपदेन क्रोधोत्साहभयजुगुप्सा विस्मय निर्वेदाख्यानां षण्णां परिग्रहः। विशेषपदेन च रत्यादेः स्थायित्व प्रयोजक परिपुष्टत्वं कान्ता विषयत्वमितरानन्त्वञ्च विवक्षित तदुक्तं –रत्यादिश्चेन्निरङ्गः स्याद्देवादिद्विषयोऽथवा अन्याङ्ग भावभाग्वास्यान्न तदास्थायि शब्दभागिति स्थायिन एवचाभिव्यक्तारसत्व यदाहुः कारणान्यथ कार्य्याणि सहकारीनियानि च रत्यादेः स्थायिनालोकेतानिचेन्नाट्य काव्ययोः विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः व्यक्तः सतैर्विभावाद्यैः स्थायी भावोरसः स्मृत इति अभिव्यक्तानाञ्च रत्यादीनां रस पाणां क्रमात् शृङ्गारहास्य करुण रौद्रवीर भयानकबीभत्साद्भुतशान्त रूप विशेष सञ्ज्ञाज्ञेया। निर्वेदादिरिति निर्वेदग्लानि शङ्काख्यास्तथासूयामदश्रमाः आलस्यञ्चैव दैन्यञ्च चिन्ता मोहः स्मृतिर्धृतिः व्रीड़ा चपलता हर्ष आवेगो जड़ता तथा गर्व्व विषाद औत्सुक्य निद्रा विस्मृति रेवच स्वप्नो विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः त्रयस्त्रिंशदमीभावाः समाख्याता स्तुनामत इति भरतेनोक्ताः ल-

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥

अत्र मुनिविषयरतिरूपस्य भावस्याद्भुतरसोऽङ्गं ।

यथा वा —

अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनःकरः ॥

अत्र करुणस्य शृङ्गारोऽङ्गं प्रेयोऽलङ्कार एव भावालङ्कार उच्यते ॥

स यथा —

कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटं ॥

ज्जादिनाविकार गोपपनमवहित्थाख्यो भावः एतेनेत्याद्यपरिपुष्टत्वादेरूप लक्षणं रतिरिति चापुष्टहासादेः अनौचित्येनेति एतच्चोदाहरणे दर्शयिष्यामः ।

मुनिरिति कुम्भसम्भवोऽगस्त्य एकचुलकेन समुद्रे पीयमाने तदन्तर्गतयोरवतार रूपयोर्मत्स्य कूर्मयोर्दर्शनेन गम्योऽद्भुतरसो प्रेमभावातिशय पर्यवसन्न तया तद्विषय रतिपोषकत्वात्तदङ्गमिति भावः अयमिति भूरिश्रवसश्छिन्नं हस्तमालोक्य तद्वधुनामुक्तिः सपूर्वानुभूतोयङ्करः यः काञ्चीसमाकर्षणशीलः नीवी वसन ग्रन्थिस्तस्याविस्रंसनोमोचक इति स्मर्यमाणया शृङ्गारावस्थया करुण रस परिपोषः ।

कदेति निमिषमिव दिवसान् कदानेष्यामीत्यन्वयः कोदृशः

अये गौरीनाथ त्रिपुरहर शंभो त्रिनयन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥

अत्र शान्तिरसस्य कदेति पदसूचितचिन्ताख्यो व्यभिचारिभावोऽङ्गं ॥

यथा वा—

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न श्रान्तासि तुभ्यं नमः ॥
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

अत्र प्रभुविषयरतिभावस्य वसुमतीविषयरतिभावोऽङ्गं ऊर्जस्वि यथा—

त्वत्प्रत्यर्थिवसुन्धरेश तरुणीः संत्रासतः सत्वरं
यान्तीर्वीरविलुण्ठितुं सरभसं याताः किराता वने ।
तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमा

काश्याङ्गङ्गातीरे वसन् अये इत्यादिरिति क्रोशन्निचयनेनान्वयः अत्युच्चा इति स्फुराः विस्तीर्णाः प्रस्तौमि प्रसञ्जयामि भुवः पृथिव्याः इमां भुवं बिभ्रत् धारयमाणः ।

त्वत्प्रत्यर्थीति हे वीर सन्त्रासतोभयाद्वने सत्वरं गच्छतीः तव प्रत्यर्थिनः शत्रवो ये वसुन्धरेशा भूपास्तेषां तरुणीर्विलुण्ठितुं याताः किराताभिल्लास्तासां तरुणीनामुत्तरलैरति चपलैः-स्तनैरति तरामतिशयेन लोलैश्चञ्चलैरपाङ्गैर्नेत्रप्रान्तैश्चतैस्ति-

स्तामामुत्तरलैः स्तनैरतितरां लोलैरपांगैरपि॥

अत्र प्रभुविषयरतिभावस्य शृङ्गाररसाभासोऽङ्गं।

यथावा—

त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते!

अजनिष्ट ममेति सादरं युधि विज्ञापयतीव द्विषद्गणः॥

अत्र कवेः प्रभुविषयस्य रतिभावस्य तद्विषयद्विषद्गणरतिरूपोभावाभासोऽङ्गं।

समाहितं यथा—

पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं

किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः।

इत्यन्योन्यविलक्ष्य दृष्टिचतुरे तस्मिन्नवस्थान्तरे

सव्याजं हसितं मया धृतिहरोमुक्तस्तुबाष्पस्तया॥

अत्रभृङ्गारस्य कोपशान्तिरङ्गं। भावोदयोयथा—

मिताःस्तब्धा प्रोन्नत रोमाञ्चाः विस्मृत उपक्रमो लुण्ठन रूपोयैस्ताइशाश्तिष्ठन्तीत्यन्वयः अत्र शृङ्गारस्याननुरक्त राजवनिता विषयत्वादनौचित्येन प्रवृत्तिरित्याभास रूपत्वं।

त्वयीति अजनिष्ट अभूत युधिसंग्रामे तद्विषयेति प्रभु विषयाद्विषद्गणस्यया रतिस्तद्रूप इत्यर्थः अत्र शत्रुविषयकत्वरूपानौचित्येन प्रवर्त्तितत्वाद्भावस्याभासत्वं पश्याम इति नायकस्य स्वमित्रं प्रति नायिका वृत्तान्तोक्तिः मयितूष्णीभूते किमियं प्रपद्यते गुरुते तत्पश्याम इत्यभिप्रायेण मयास्थैर्यं मौन रूपमालम्बितमङ्गीकृतं पश्याम इति बहुवचनं सखी समानाभिप्रायं

तदद्य विश्रम्य दयालुरेधिमि
दिनं निनीषामि भवद्विलोकिनी।
अदर्शि पादेन विलिख्य पत्रिणा
तवैव रूपेण समः स मत्प्रियः॥

अत्र नलं प्रति दयमन्त्या औत्सुक्य रूपभावस्यो-
दयः शृङ्गाररसस्याङ्गभावसन्धिर्यथा—

एकाभूत्कुसुमायुधे षुधिरिव प्रव्यक्तपुङ्खावली
जेतुर्मङ्गलपालिकेव पुलकैरन्याकपोलस्थली।
लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो
द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरं॥

अत्र त्रासौत्सुक्ययोः सन्धिः प्रभुविषय-
स्याङ्गभावशबलंयथा—

एवं तथापि अयं खलु शठोमाङ्गिमितिनालपतिभाषत इति
कोप आश्रित इत्यनोन्यं परस्परं विलक्ष्यालक्ष्य रहिताया दृष्टि-
स्तत्र चतुरे सव्याजं निमितान्तर व्याज सहितं तदिति एधिभव
निनीषामि नेतुमिच्छामि यतस्तवैव रूपेण समः समस्प्रियोनलः
पत्रिनाहं सनेपादेन विलिख्य अदर्शि दर्शितः एकेति हे वीर-
क्षण मात्रेण युद्ध प्रस्थानाद्भावीयो विरहक्लेशस्तदसहिष्णुं लो-
लाक्षींदयितां पश्यतस्तथा प्रौढ़ संग्रामाडम्बरमाकर्ण्य यतश्च
भवः एकाकपोलस्थलीद्राक् शीघ्रं पुलकैः कुसुमायुधस्य मदन-
स्येषुधिस्तूणीमिव प्रव्यक्ता पुङ्खावली शरपुङ्ख पङ्क्तिर्यत्र तथा
भूताऽभूत् अन्याद्वितीया जेतुर्जयशीलस्य मङ्गल पालिका मङ्ग-

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोपि दृश्येत सा ,
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखं।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शवलता विप्रलम्भशृङ्गारस्याङ्गं ॥७॥

प्रमाणालङ्कारे प्रत्यक्षं यथा —

कान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।
स्वादुनि प्रणदितालिनि शीते निर्विवार मधुनीन्द्रियवर्गः ॥

यथावा—

किन्तावत्सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते युवत्याः ।

रूपा पालिकायाकुश्यकाशादि निर्मिता उभय पार्श्वस्थस्तम्भ मञ्चादिषु वक्राभार्गशालेति प्रसिद्धा तद्वद्भूदित्यर्थः अत्र प्रेमपदोक्तायारतेरपरिपुष्टत्वाद्भावरूपत्व। बोध्यका कार्यमिति। शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्तिः अकार्यं ब्राह्मण कन्यासक्तिः शशलाञ्छनस्य चन्द्रस्य कुलं सोमवंशः अयं वितर्कः तदुपमर्द्देन भूयोपीत्यौत्सुक्यं एवमग्रेपि श्रुतं शास्त्रश्रवणमितिमतिः अहोकोपेपीतिस्मरणं अपगतकल्मषाः कृते सुकृते धीर्येषान्ते किं वदिष्यन्तीति शङ्का स्वप्नेपीतिदैन्यं हे चेतः स्वास्थ्यमुपैहीतिधैर्यं कः खलुधन्यो युवा तरुणः अधरन्धास्यतिपास्यतीति चिन्ता विप्रलम्भो वियोग इति पर्यायो कान्तेति। इन्द्रि-

संशय्य क्षणमिति निश्चिकायकश्चि-
द्विब्बोकैर्बकसहवासिनां परोक्षैः ॥

एवंत्र प्रत्यक्षमात्रमचतु विशेषदर्शनजन्यसंशयो-
त्तरप्रत्यक्षमितिभेदः ॥ ८ ॥

अनुमानं यथा—

यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिक ! तरुखण्डे स्मरदवः ॥

याणां वर्गः समूहः मधुनिमग्ने निर्व्वारनिवृत्तिं प्राप कथम्भूते संक्रान्तिप्रियमुखप्रतिबिम्बभग्नकोमलाम्रपल्लववत्सुगन्धोस्वादुनि आरवाद्ये प्रकाशनादयुक्ता भ्रमरयुते शीतस्पर्शेचेति अत्रेन्द्रियद्वयात्तज्जन्य प्रत्यक्षमलङ्कारः किमिति आरात् दूरेइति क्षणं नन्दिस्थ-कश्चित्वक सहवासिनां कमलानां परोक्षैरहश्यैर्बिब्बोकैर्मौनात्प्रिय कथालापेविब्बोकोनादरःश्रियेत्युक्तलक्षणैर्हावविशेषे मुखमिति निश्चिकाय निर्णीतवान् । इतिप्रत्यक्षम्॥८॥ यथेति यथाशब्दा अनुमानार्थाः यथा शब्दस्तु निर्दिष्टस्तुल्ययोगानुमानयोरिति विश्वकोशात् तथा च चपल-जलद-रूपोधूमः व्योम्न आकाशस्य रन्ध्रमवकाशं यस्मात्स्थगयति तस्माच्च कीटमणयः खद्योताः स्फुलिङ्गानां रूपं दधति धारयन्ति यस्माच्च विद्युद्रूपाभिर्ज्वालाभिरुल्लसिताः प्रकाशीभूताः परितः पिङ्गवर्णाश्च ककुभोदिशस्तस्मात्पथिकरूपापान्तरूपा खण्डे समूहे स्मरलक्षणोदवाग्निर्लग्न इति मन्ये

यथावा—
यत्रैता लहरीचलाचलदृशोव्यापारयन्ति भ्रुवौ
यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशोमार्गणाः।
तच्चक्रीकृतचापपुङ्खितशरप्रेङ्खत्करःक्रोधनो
धावत्यग्रत एव शासनधरः सत्यन्तदाऽसां स्मरः॥
पूर्वं रूपकसङ्कीर्णमिदमतिशयोक्तिसंकीर्णमिति
भेदः॥

शुद्धानुमानं यथा—
विलीयमानैर्विहगैर्निमीलद्भिश्चपङ्कजैः।
विकसन्त्याच मालत्या गतोस्तं ज्ञायते रविः॥

इत्यन्वयः प्रयोगस्तु पथिकतरुखण्डस्मरदावानलवत् व्योमव्यापि ज्वलद्धूमवत्वादिर्बोध्यः।

यत्रैता इति लहरीवच्चलाचलाश्चञ्चलाहशोयासान्ता एताः कामिन्यः यत्रयत्रनेभ्रूलतां व्यपारयन्ति प्रेरयन्ति तत्रैव भ्रूसंज्ञा विषय एव यद्यस्मादमीमर्मस्पर्शिनो बाणाः सन्ततं पतन्ति तत्त-स्मात्मण्डली कृतेचापे पुंङ्खितायोजितमुखाये शरास्तेषु प्रेङ्खन् चपलः करो यस्य तादृशः क्रोधनःस्मरः शासनमाज्ञातद्धारक आसामग्रतो धावतीति सत्यमित्यन्वयः। अतिशयोक्तीति मार्गण-त्वेन दृशामध्यवसानादितिभावः। प्रयोगस्तु एताः चक्रीकृतचापं सदापुरोधावदाज्ञाकरमदनकाः मर्मभेद बाणपाताश्रय भ्रूसंज्ञा स्थानकत्वादिति बोध्यः एवं निलीय मानैरित्यत्रापि अयं कालः सूर्यास्तमयवान् पक्षिनिलीयमानताद्याश्रयत्वादिति

यथा वा—

सौमित्रे! ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा? रघुपते! चन्द्रोऽयमुन्मीलति।
वत्सैतद्विदितं कथं नु भवता? धत्ते कुरङ्गं यतः
क्वासि प्रेयसि! हा कुरङ्गनयने! चन्द्रानने! जानकि॥

उपमानं यथा—

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले
यस्तन्वि! तारकान्यासः शकटाकारमाश्रितः॥
अत्र मन्मथमिवातिसुन्दरं दानवारिमिव दिव्यतेजसं।
शैलराजमिव धैर्यशालिनं वेत्सि वेङ्कटपतिं महीपतिं॥

पूर्वोदाहरणे उपमानभूतमतिदेशवाक्यं दर्शितं अत्रातिदेशवाक्यार्थसादृश्यप्रत्यक्षरूपमुपमानं फलेन सह दर्शितमिति विशेषः॥८॥

रविरस्तगमनवान् तादृशकालसम्बन्धित्वादिति वा प्रयोगोऽत्र ज्ञेयः॥

सौमित्रे इति विरहातुरस्य रामस्य लक्षणं प्रत्युक्तिः अत्राप्ययं चन्द्रः कुरङ्गधारित्वादिति प्रयोगः॥ इत्यनुमानं॥८॥ तामिति तारकाणां न्यासः संनिवेशः शकटाख्याकारं संस्थानं आश्रितस्तां रोहिणीं विजानीहीत्यतिदेशवाक्यार्थे ज्ञानमिहोपमानं इयं शकटाकारनक्षत्र व्यक्तिः रोहिणीपदवाच्येत्युपमिति प्रतिकरणत्वात् अत्रेति अत्र एषु राजसुमध्ये मन्मथमिवाति सुन्दरं महीपतिं वेङ्कटपतिसंज्ञकं वेत्सीत्याद्यन्वयः दानवारिर्विष्णुः शैलराजं

शब्दप्रमाणं यथा—

विवृण्वता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितं।
यमामनन्त्यात्मभुवोपि कारणं कथं स लक्ष्यप्रभवो भविष्यति॥

अत्र शिवः परमेष्ठिनोपि कारणमित्यत्र श्रुतिरूपं शब्दप्रमाणमुपन्यस्तं एवं स्मृतिपुराणागमलौकिक वाक्यरूपाण्यपि शब्दप्रमाणान्युदाहरणीयानि।

तत्र स्मृतिर्यथा—

बलात्कृत पापानि सन्तु तान्यकृतानिवः।
सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत्॥

पूर्वं श्रुतिरभिमतार्थप्रमाणत्वेनोपन्यस्ता इह तु

हरं धैर्यशालिनं मदनशासकत्वात्। प्रत्यच रूपमिति सादृश्य विशिष्ट पिण्ड प्रत्यचस्यापि फलायोग व्यवच्छिन्नत्वेन करणत्वादितिभावः। फलेन उपमिति रूपेण॥ इत्युपमानं॥

विवृण्वतेति कुमारसम्भवे वटुवेषं हरं प्रतिपार्वत्या इयमुक्तिः वरदोषं प्रकाशयतापि स्खलितान्तःकरणेन त्वया इमं महादेवं प्रति एकं अलक्ष्यजन्मत्वं साधूक्तं यतो यमीशमात्मभुवो ब्रह्मणोपि कारणमामनन्तिवेदाः स कथं लक्ष्यः प्रभव उत्पत्तिस्थानं यस्य तादृक्भविष्यतीत्यन्वयः। विवचतेति क्वचित्पाठः वक्तुमिच्छति तदर्थः बलादिति नास्तिकोक्तिरियं हे जनाः पापानि बलात्कृतनानि च पापानि वोयुष्माकं अकृतान्येव भवन्तु यतो बलात्कारेण कृतान् सर्वानर्थान्मनुरकृता न ब्रवीदित्यन्वयः।

तद्दूषणपरेणसर्वाभिमतार्थदूषणपरेण आत्मनस्तुष्टिः प्रीति-

स्मृतिरनभिमतार्थे तद्दूषणपरेण प्रमाणतयानीतेति भेदः ।

आचारात्मतुष्ट्योरपि मीमांसकोक्तधर्मप्रमाणयोर्वेदशब्दानुमापकतया शब्दप्रमाणएवान्तर्भावः ॥

तत्राचारप्रमाणं यथा—

महाजनाचारपरं परेद्दशी वनामनामाददते नसाध्वः ।
अतोभिधातुं न तदुत्सहे पुनर्जनः किलाचारमुचं विगायति ॥

आत्मतुष्टिप्रमाणं यथा—

असंशयं क्षत्रपरिग्रहक्षमायदार्यमस्यामभिलाषि मे मनः
सन्तांहि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥

अत्र दुष्यन्तेनात्मतुष्ट्या शकुन्तलापरिग्रहस्य धर्मत्वं श्रुत्यनुमतमनुमीयते एवं श्रुतिलिङ्गादिकमपि मीमांसोक्तं प्रमाणं सम्भवद्भिरुदाहर्तव्यं ।

वैककि विषये गर्भाष्टमेऽष्टमेवाब्दे ब्राह्मणस्योपनमानमित्यादौ प्रमाणमित्युक्तं । महाजनेति दमयन्तीं प्रति नलस्योक्तिः नाम वितर्कं नाददते न गृह्णन्ति आचारमुचं आचारत्यागिनं विगायति निन्दति ।

असंशयमिति क्षत्रेण क्षत्रियेण परिग्रहे समावोग्याः यत आर्यं श्रेष्ठं मम मनो यस्यां शकुन्तलायामभिलाषशीलं पदेषु विषयेषु त्वं हीति वरमुद्रिकां वरदमुद्रां नाधत्से न धास्यसि श्रुतिर्वरद संज्ञा कपालिङ्गात्मकं पक्षे श्रुत्या तृतीयादिरूपया प्रकर्षेण शीघ्रं सिद्धे अर्थे अङ्गाङ्गिभावे सति लिङ्गमर्थप्रकाशन

तत्र श्रुतिर्यथा—

त्वं हि नाम्नैव वरदो नाथ त्वं वरमुद्रिका।
नहि श्रुतिप्रसिद्धार्थे लिङ्गमाद्रियते बुधैः॥

अत्र करिगिरीश्वरस्य वरद इत्यभिधानश्रुत्या सर्वाभिलषितदातृत्वं समर्थितं। लिङ्गं यथा—

विदितं बोधयाम्यर्थो न मे काश्चित्प्रवृत्तयः।
ननु मूर्त्तिभिरष्टाभिरित्थं भूतोऽस्मि सूचितः।

अत्र शिवस्य श्रुतिप्रसिद्धसर्वोपकारकपृथिव्याद्यष्टमूर्त्तिपरिग्रहलिङ्गेन तत्प्रवृत्तीनां लोकानुग्रहैकप्रयोजनत्वं समर्थितं लिङ्गस्य मूलभूतवेदानुमापकतया वैदिकशब्दप्रमाणएवान्तर्भावः एवं लौकिकलिङ्गानामपि लौकिकशब्दोन्नायकतया लौकिकशब्दप्रमाण एवान्तर्भावः। अतः—

लोलङ्गूलमया विपक्षदिगुपन्यासे विधूतं शिर-

सामर्थ्यं रूपमाद्रियते यथैन्द्र्यागार्हपत्यमुपतिष्ठत इति श्रुत्या गार्हपत्योपस्थाने विनियुक्तस्य मन्त्रस्येन्द्रप्रकाशनसामर्थ्यरूपेण लिङ्गेनेन्द्रोपस्थाने विनियोगो नाद्रियते इत्यर्थं करिगिरीश्वरः काल हस्तीश्वरः।

विदितमिति इत्थंभूतः परार्थैकप्रवृत्तिकः अत इत्यस्य चेष्टा कथं प्रमाणान्तरं नाशङ्कनीयमित्यग्रेतनेनान्वयः लोलेति गुरूणां संनिधावपिहाभ्यां नायकाभ्यां समयोचिती विधिमो-

स्तद्वृत्तान्तपरीक्षणे कृतनमस्कारो विलक्ष्यस्थितः।
ईषत्ताम्रकपोलकान्तिनि मुखे दृष्ट्या नतः पादयो-
रुत्सृष्टो गुरुसन्निधावपि निजे धिग्दीर्घ्यां नकालोचितः॥

इत्यादिचेष्टारूपं प्रमाणान्तरं नाशङ्कनीयं।

क्वचिच्छ्रुतप्रमाणकल्पनया चमत्कारो यथा—

किमसुभिर्ग्लपितैर्जडमन्यसे मयि निमज्जतु भीमसुतामनः
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः॥

अवम्रियमाणानां मनश्चन्द्रं प्रविशतीत्येतदर्थिकायाः श्रुतेर्नलमुखचन्द्रविषयत्वे कल्पिते यथा व्याख्यातृस्मरवाक्यं प्रमाणतयोपन्यस्तं॥ ११॥

अर्थापत्तिर्यथा—

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि!
अन्यथानोपपद्येत पयोधरभरस्थितिः॥

लक्ष्टः यथा लोलङ्गूलतया नायिकया विपक्षस्य सपत्न्यादेर्दिश उपन्यासे तस्मादागतो सोऽसि सूचने कृते नायकेनेति सूचनाय शिरोविधूतं प्रक्षालितं ततस्तद्वृत्तान्तपरीक्षणे नायिकया कृते सद्य कृत नमस्कारः विलक्ष्य एवं स्थितः।

तत ईषत्ताम्रा कपोल कान्तिर्यस्य तादृशे नायिकाया मुखे कोपातिशयाज्जाते सति तत्पादयोर्दृष्टिपातेनैवानतः प्रणत इति किमसुभिरिति व्याख्यातं प्राक् तथेति नल मुखचन्द्र विषयत्व व्याख्यातुः स्मरस्येयर्थः तत्रासिद्धत्वात्कल्पितमितिभावः इति शब्दः निर्णेतुमिति अस्तीति निर्णेतु शक्यमित्यन्वयः व्यक्तमिति

यथावा—

व्यक्तं बलीयान् यदि हेतुरागमाद-
पूरयत् सा जलधिं न जान्हवी ।
गङ्गौघनिर्भर्त्सितशंभुकन्धरा-
सुवर्णमणा: कथमन्यथा स्यात् ॥ १२ ॥

अनुपलब्धिर्यथा—

स्फुटमसद्वलग्नं तन्वि ! निश्चिन्वते ते-
तदनुपलभमानास्तर्कयन्तोपिलोकाः ।
कुचगिरिवरयुग्मं यद्विना धारमास्ते-
तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥ १३ ॥

सम्भवोयथा—

अभूतपूर्वं मम भावि किंवा सर्वं सहे मे सहजं हि दुःखं ।
किं तु त्वदग्रे शरणागतानांपराभवोनाथ! न तेरनुरूपः॥

हेतुस्तर्कः यदिव्यक्तं प्रकाऽम्बलीयान् तदासाजान्हवीजलधिनां पूरयत् अन्यथा पूरणे सति अर्णः समुद्रस्य जलं गङ्गौघैर्निर्भर्त्सितं तिरस्कृतंसत् शम्भुकण्ठ समान वर्णं नीलं कथं स्यादित्यन्वयः इत्यर्थात्पत्तिः ॥ १२ ॥

स्फुटमिति हेतन्वितर्कयन्तशीला अपिलोकास्तद्वलग्नं अनुपलभमाना अपश्यन्त स्तवावलग्नं मध्यमसदिति स्फुटमेव निश्चिन्वते कुलपर्वत श्रेष्ठ युग्मलं नाध्यवतिपं स्तनद्वन्द्वमाधारं विना यदास्तेतत्त्विह मकरध्वजस्येन्द्रजालं मायाचरितं प्रतीम इत्यन्वयः इत्यनुपलब्धिः ॥ १३ ॥

यथावा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥

यथावा—

भ्रातः पान्थ! कुतोभवान्? नगरतो वार्त्ता नवा वर्त्तते?
वाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति।
सत्यं जीवति? जीवतीति कथिता वार्त्ता मयापि श्रुता
विस्तीर्णा पृथिवी जनोपि विविधः किं किं न सम्भाव्यते!

अभूतेति ईश्वरं प्रतिभक्तस्योक्तिः पूर्वमभूतं—अभूतपूर्वन्त्वा-दृशं मम किंवा भाविनकिञ्चित् सर्वं शीतातपादिद्वन्द्वसहे ह्रियतो मम सहजमेव दुःखमस्ति किन्तु हे! नाथ ते तव शरणागतानां भक्तानां त्वदग्रे पराभवो नानुरूपोनोचित इत्यन्वयः। अथवा तवनानुरूप इत्यन्वयः। अत्र दुःखादेः सम्भवाख्य प्रमाण सिद्धस्य कथनं। येनामेति भवभूतेरुक्तिः, नामेति कुत्सने। नाम प्रकाश्य सम्भाव्य क्रोधोपगम कुत्सन इत्यमरः। किमपीतिकाकुः न किमपीत्यर्थः एषः, काव्य निर्म्माणरूपः मम कोपि समान धर्म्मा सदृशोयं उत्पत्स्यते अस्तिवा तं प्रतियत्नः ह्रियस्मान्निरवधि-रयं कालः पृथ्वी च विपुलेति क्रमेण योज्यं अत्र कालोह्ययमि-त्यादिना सोपपत्तिकं सम्भवाख्यप्रमाणमुपदर्शितम्।

भ्रातरिति पथिकं प्रति ग्रामस्थस्य प्रश्नः। कुत इत्यनन्तरमा-

अत्राद्योदाहरणे अभूतपूर्वं समभावि किं वेतिस-म्भवप्रमाणमिद्धार्थौ दर्शितः। द्वितीयोदाहरणे स-म्भवोपपादकं कालानन्त्यादिकमपि दर्शितं। तृतीये-दाहरणे तु सम्भवोऽपि कण्ठोक्तइति भेदः ॥ १४ ॥

ऐतिह्यं यथा—

कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दोनरं वर्षशतादपि ॥

अत्र लौकिकी गाथेयमित्यनिर्द्दिष्टप्रवक्तृकप्रवा-दपारम्पर्यरूपता दर्शिता ॥ १५ ॥

अथैतेषामलङ्काराणां यथासम्भवं क्वचिन्मिलने लौकिकालङ्काराणां मेलन इव चारुत्वातिशयोपलम्भान्नरसिंहन्यायेन पृथगलङ्कारावस्थितौ तन्निर्णयः क्रियते। तत्र तिलतण्डुलन्यायेन स्फुटावगम्य भेदा-

गत इतिशेषः। नगरादित्युत्तरं। वार्त्तेति पुनः पूर्वस्य प्रश्नः। वाढ़मित्युत्तरं। अङ्गीकारे अस्तीत्यर्थः। ब्रूहीति पूर्वस्योक्तिः। युवेत्यादि पान्थ वचनं। सत्यञ्जीवतीति पुनः पूर्वस्य प्रश्नः। जीवतीत्यादि सर्वं पान्थवचनं इति सम्भवः ॥ १४ ॥

अनिर्द्दिष्ट प्रवक्तृकेति अनिर्द्दिष्टो विशेषतोनुक्तः प्रवक्ता यस्ये-त्यर्थः एवञ्चैतदेवैतिह्यलक्षणमिति दर्शितं ॥

इत्यलङ्कारचन्द्रिकायां प्रमाणालङ्कारप्रकरणं सम्पूर्णं ॥१५॥

यथासम्भवमिति संसृष्टिसङ्कराभ्यां द्वयोस्तदधिकानां वेति यथासम्भवमित्यर्थः। स्फुटेति स्फुटमवगम्यमानो भेदोयेषामिति

लङ्कारमेलने संसृष्टिः। नीरक्षीरन्यायेनास्फुटभेदालङ्कारमेलने सङ्करः सचाङ्गाङ्गिभावेन समप्राधान्येन संदेहेन एकवाचकानुप्रवेशेन चतुर्विधः। एवं नृसिंहाकाराः। पञ्चालङ्काराः॥

तत्र संसृष्टिर्यथा—

कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया।
चलितया विदधे कलमेखलाकलकलोलकलोलदृशान्यया॥

अत्र शब्दालङ्कारानुप्रासयमकयोः संसृष्टिः॥

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥

अत्रोत्प्रेक्षयोरुपमायाश्चेत्यर्थालङ्काराणां संसृष्टिः॥

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य।

विग्रहः एकस्मिन्वाचकेनुप्रवेशोऽवस्थितिः एतत्सर्वमुदाहरणे व्यक्तो भविष्यति। कुसुमेति माघवसन्तवर्णने पद्यमिदं। अन्यया कयापि वनितया चलितया कलस्वरोमेखलयाः काञ्च्याः कलकलः कोलाहलो विदधे किम्भूतया कुसुमसौरभलोभेन परिभ्रमतां भ्रमराणां सम्भ्रमेण त्वरा विशेषेण संभृता सम्बद्धा शोभा यस्यास्तथा अलकलोला यस्यां तादृशी दृक् यस्याः तथा भूतयेति आनन्देति आनन्देन मन्थरं यथास्यात्तथा पुरन्दरेणेन्द्रेण मुक्तमर्पितं माल्यं यत्र तादृशं महिषासुरस्य मौलौ मस्तके हठेन निहितं।

पादाम्बुजं भवतु मे विजयाय मञ्जु
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥

अत्र शब्दार्थालङ्कारयोरनुप्रासोपमयोः संसृष्टिः ।
अङ्गाङ्गिभावसङ्करो यथा—

तलेष्ववेपन्त महीरुहाणां
छायास्तदा मारुतकम्पितानाम् ।
शशाङ्कसिंहेन तमोगजानां
लूनाकृतीनामिव गात्रखण्डाः ॥

अत्र शशाङ्कसिंहेनेति तमोगजानामिति च रूपकं । यद्यप्यत्र शशाङ्क एव सिंहस्तमांस्येव गजा इति मयूरव्यंसकादिसमासाश्रयणेन रूपकवत् शशाङ्कः सिंह इव

मञ्जु मनोज्ञं मञ्जीरस्य नूपुरस्य शिञ्जितं रणितं यत्र तादृश मनोरममम्बिकायाः पादाम्बुजमम्बुजसदृशं चरणं नोऽस्माकं विजयाय भवत्वित्यन्वयः । अत्र पादाम्बुजमित्युपमितसमास एव नतु मयूरव्यंसकादिवत्पाद एवाम्बुजमिति तथासत्यम्बुजप्राधान्ये मञ्जीरा सञ्जितान्वयायोगादित्युपमैव न रूपकमितिज्ञेयं ॥ इति संसृष्टिः ॥

तलेष्विति तदा मारुतकम्पितानां महीरुहाणान्तलेषु छाया अवेपन्त कम्पमाना आसन् अत्रोत्प्रेक्षते शशाङ्करूपेण सिंहेनच्छिन्ना कृतीनान्तमोलक्षणगजानां शरीर खण्डा इवेति ।

गुणानाञ्चेति । तार्तीयाधिकरणसूत्रं । अस्यार्थः—गुणानां गुणभूतानां पदार्थानां परार्थत्वात् मुख्यप्रधानार्थत्वात् परस्परं

तमांसि गजा इवेत्युपमितसमासाश्रयणेनोपमापि वक्तुं शक्या। तथापि लूनाकृतोनामिति विशेषणानुगुण्याद्रूपकसिद्धिः तस्य हि विशेषणस्य प्रधानेन सहान्वयेन भाव्यं न तु गुणेन, गुणानां च परार्थत्वाद-सम्बन्धः समत्वात्स्यादिति न्यायादुपमितसमासाश्रयणे तस्य पूर्वपदार्थप्रधानत्वात् शशाङ्कस्य तमसां च प्राधान्यं भवेत् तत्र न विशेषणमुख्यार्थान्वयस्वारस्यमस्ति स्वरूपनाशरूपोपचरिताकृतिलवनकर्तृत्वकर्मत्वान्वयसम्भवेऽपि मुख्यार्थान्वयस्वारस्यमेवादरणीयं स्वरूपनाशक्रोडीकरणदृत्त्या लक्षणामूलातिशयोक्त्या रूपकसिद्धिः। तच्च रूपकमुत्प्रेक्षाया अङ्गं तदुत्थापकत्वात्। रूपकाभावे हि छायालूनगात्रखण्डा इवाविपन्नत्वेताव-

असम्बन्धः कुतः समत्वात् अप्रधानत्वसाम्यादिति यथा भाष्यकारमते पात्नीवतमानिष्टौ नामाधानस्य चाहवनीयाद्यर्थत्वात्परस्परं नाङ्गाङ्गिभावः सम्बन्धः यथा वार्त्तिककारमतेऽग्निसमिन्धनार्थानां मन्त्रविशेषरूपाणां निविदां सामधेनीनाञ्चेति संक्षेपः । एतदधिकरणपूर्वपक्षसिद्धान्तौ प्रकृतानुपयोगान्न दर्शितौ ।

स्वरूपनाशेति । स्वरूपनाशरूपमुपचरितं गौणं यद्राकृति लवनमित्यर्थः। नन्वेवमपि तमोंऽशेऽस्य विशेषणस्यान्वयात्कथं रूपकसिद्धिरित्याशङ्क्याह—स्वरूपेति । क्रोडीकारेण निगरणेन । लक्षणामूलेति। साध्यवसानलक्षणामूलेत्यर्थः तथा च तमींशे उपचारेणान्वय इतिभावः। नचैवं सत्युपमाङ्गीकारेपि किञ्चा-

दुक्तावुपमैव सिद्ध्येत्। वेपनादिसाधर्म्यान्नच्छायानां सद्यः कृतगात्रखण्डतादात्म्यसम्भावनारूपोत्प्रेक्षा। ननु शशाङ्केन लूनाकृतीनां तमसां गात्रखण्डा इवावेपन्तेत्येतावदुक्तावपि सिद्ध्यत्युत्प्रेक्षा तादात्म्यसम्भावनोपयुक्तलूनाकृतित्वरूपाधिकविशेषणोपादानात्? सत्यं। तथोक्तावाकृतिलवनादिधर्मरूपकार्यसमारोपनिमित्ताशशाङ्कतमसोर्दृढंतव्यचेतनवृत्तान्तसमारोपरूपा समासोक्तिरपेक्षणीया। एवमुक्तौ रूपकमितिविशेषः। एवमत्रातिशयोक्तिरूपकोत्प्रेक्षाणामङ्गाङ्गिभावेन सङ्करः।

समप्राधान्यसङ्करो यथा—

अवतु नः सवितुस्तुरगावली समतिलङ्घिततुङ्गपयोधरा।
स्फुरितमध्यगतारुणनायकामरकतैकलतेव नभश्रियः॥

धकमिति वाच्यं तदङ्गीकारे प्रधानान्वये ऽप्युपचाराश्रवणापत्तेः तदपेक्षयाऽप्रधाने तमांशितदङ्गीकारेण रूपकस्यैवौचित्यादिति न छायानामिति सिद्ध्येदित्यनुवर्तते उत्प्रेक्षा न सिद्ध्येदित्यन्वयः। इव शब्दस्य सादृश्ये प्रसिद्धतरत्वेनासतितात्पर्यग्राहके सम्भावना बोधकत्वा सम्भवादितिभावः। रूपकं विनाप्युत्प्रेक्षायास्तात्पर्यग्राहकमस्तीति शङ्कते—नन्विति एवमुक्तौ तमोगजानामित्युक्तौ तथा च साधकान्तरस्य साधकान्तराद्दूषकत्वाद्रूपकस्योत्प्रेक्षाङ्गत्वमविकृतमितिभावः। अवत्विति। सवितुः सूर्यस्य तुरगावली अश्वपंक्तिर्नोऽस्मानवतु केव? नभः श्रियः गगन

अत्र पयोधरादिशब्दश्लेषमूलातिशयोक्त्याङ्गभूतयोत्थाप्यमानैव सवितृतुरगावल्यां मरकतैकावलीतादात्म्योत्प्रेक्षा नभोलक्ष्म्यां नायिकाव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते, पयोधरश्लेषस्योभयोस्तुल्य इति विनिगमनाविरहात् समप्राधान्यं ।

यथावा—

अङ्गुलीभिरिवकेशसञ्चयंसन्निगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीवरजनीमुखंशशी ॥

अत्राङ्गुलीभिरितिवाक्योक्तोपमयातत्प्रायपाठान-

लक्ष्म्याः मरकत मणीनामेकलता एकावलीवेत्युत्प्रेक्षा । सूर्यतुरङ्गाणां हरितवर्णत्वात् कथंभूता सध्यगतिलङ्घितास्तुङ्गा उच्चाः पयोधरा मेघा यथा एकावली पक्षे पयोधरौ स्तनौ तथा स्फुरितो दीप्तिमान् मध्यगतः अरुणरूपो नायकोनेता सारथिर्यस्याः सा । पक्षे अरुणः आरक्त नायको हारमध्यमणिः नायकोनेतरिश्रेष्ठे हारमध्यमणावपीति विश्वः अतिशयोक्त्या मेघानां स्तनत्वे नाध्यवसानरूपया गर्भैवेत्यनेन तिलतण्डुलन्यायेन स्फुटावगम्यमानभेदायाः संसृष्टेः सकाशाद्दै लक्षण्यन्दर्शितं । एवमत्रेति एकस्य चमत्कृतिजनने परापेक्षत्वादङ्गाङ्गिभावमाशङ्काह परस्परेति ।

अङ्गुलीभिरिति शशी अङ्गुलीभिरिव मरीचिभिः केशसञ्चयमिवतिमिरं संनिगृह्य कुड्मलीकृत सरोज लोचनं लोचनमिव सरोजं यत्र तादृशं रजनी मुखं चुम्बतीवेत्यन्वयः । तत् प्रायेति

मुख्यकुड्मलीकरणलिङ्गानुगुण्याच्च उपमितसमासा-श्रयणेन लब्धया सरोजलोचनमिति समासोक्त्योपमया कुड्मलयोत्थाप्यमानैव शशिकर्तृकनिशामुखचुम्बनोत्-प्रेक्षा निशाशशिनोर्दाम्पत्यव्यवहारसमारोपरूपसमा-सोक्तिगर्भैवोत्थाप्यते उपमयोरुभयत्रोत्थापकत्वाविशे-षात । समासोक्तिगर्भतां विना चुम्बनोत्प्रेक्षाया निरा-लम्बनत्वाच्च । ततश्चात्राप्युत्प्रेक्षासमासोक्त्योरेक-कालयोः समप्राधान्यं । यद्यप्युपमाभ्यां शशिनिशा-गताविव धर्मौ समर्प्यते न तु शशिनायकयोर्निशानाय-कयोश्च साधारणधर्मौ साधारणधर्मसमर्पणं चोत्प्रेक्षा-समासोक्त्योरपेक्षितं उत्प्रेक्षायाः प्रकृताप्रकृतसाधा-रणगुणक्रियानिमित्तसापेक्षत्वात्समासोक्तेर्विशेषण-साम्यमूलकत्वाच्च । तथापि वाक्योक्तोपमायामिव कारस्य मरीचिभिरिवेत्यन्वयान्तरमभ्युपगम्यान्वय-भेदलब्धप्रकृताप्रकृतयोरेकैकविषयस्यार्थद्वयस्य समा-सोक्तोपमायां सरोजसदृशं लोचनमिति समासान्तर-

उपमाबहुले सन्दर्भे पाठादित्यर्थः । मुख्येति मुख्यार्थरूपं। यत्कु-ड्मलीकरणरूपं लिङ्गं पुष्पसाधारणधर्मस्तस्यानुकूल्यादित्यर्थः ।

उत्थापकत्वाविशेषात् सङ्गत्वाविशेषात् चन्द्रस्य चुम्बनोत्प्रे-क्षायां दाम्पत्यव्यवहार समारोपात्मक समासोक्तौ चापेक्षितस्य नायकसाधर्म्यस्योक्तोपमाभ्यामसमर्पणात् कथं तयोस्तदङ्गत्वमिति

मभ्युपगम्य समासभेदलभ्यार्थद्वयस्य चाभेदाध्यवसायेन साधारण्यं सम्पाद्य तयोरुत्प्रेक्षासमासोक्त्योरङ्गता निर्वाह्या। यद्वा इह प्रकृतकोटिगतानां मरीचितिमिरसरोजानामप्रकृतकोटिगतानां चाङ्गुलीकेशसञ्चयलोचनानां च तनुदीर्घावरणत्वनीलनीरन्ध्रत्वकान्तिमित्वादिना सदृशानां प्रातिस्विकरूपेण भेदवदनुगतसादृश्यप्रयोजकरूपेणाभेदोऽप्यस्ति। स चात्र विवक्षित एव भेदाभेदोभयप्रधानोपमेत्यालङ्कारिकसिद्धान्तात्। तत्र च प्रयोजकांशनिष्कर्षणायेनाभेदगर्भतांशोप-

प्रकृते यद्यपीति मरीचिभिरिवेति मरीचिभिरिवाङ्गुलीभिस्तिमिरमिव केशसञ्चयमित्येवं रूपमित्यर्थः एकैकविषयस्यार्थद्वयस्याभेदाध्यवसानेनेत्यन्वयः तयोः वाक्यसमासोक्त्योपमयोः।

आवश्यकाभेदाध्यवसायेनोपपत्तौ कृतमन्वयान्तरसमासान्तरकल्पनागौरवेणेत्याशयेनाह यद्वेति तनुदीर्घेत्यादौ पूर्वनिपातनियमानुरोधेन यथासङ्ख्यक्रमपरित्यागः तथा चाङ्गुलिमरीच्योस्तनुत्वनीरन्ध्रत्वाभ्यान्तिमिरकेशसञ्चययोरावरणरूपत्वनीलत्वाभ्यां सरोजलोचनयोर्दीर्घत्वकान्तिमत्वाभ्यां च सादृश्यं बोध्यं प्रातिस्विकरूपेण अङ्गुलित्व मरीचित्वादिना। अनुगतेति॥ अनुगतं यत्सादृश्यप्रयोजकं रूपन्तनुत्वादिकं तेनेत्यर्थः एतच्च सादृश्यमतिरिक्तमित्यभिप्रायेण सिद्धान्तादिति तदुक्तं साधर्म्यं त्रिविधं भेदप्रधानमभेदप्रधानं भेदाभेदप्रधानं चेत्युपक्रम्य विद्यानाथेन उपमानन्वयोपमेयोपमासाधारणानां भेदाभेदसाधा-

जीवनेन साधारण्यं सम्पाद्य प्रधानभूतोत्प्रेक्षा समासोक्त्यङ्गता निर्वाह्या। नहि प्रकाशशीतापनयनशक्तिमतः सौरतेजसः शीतापनयनशक्तिमात्रेण शीतालूपयोगिता न दृष्टा एवमनभ्युपगमे च—

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बाला तपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥

इत्यादावुपमापि न निर्वहेत् नह्यत्राद्रिराजपाण्ड्ययोरुपमानोपमेययोरनुगतः साधारणधर्मो निर्दिष्टः एकत्र बाला तपनिर्झरावन्यत्र हरिचन्दनहाराविति धर्मभेदात् तस्मात्तत्रातपहरिचन्दनयोर्निर्झरहारयोश्च सदृशयोरभेदांशोपजीवनमेव गतिः।

रणसाधर्म्यमूलत्वमिति ननु भेदाभेदरूपां शङ्कयोपितायाः उपमायाः भेदांशस्यानुपयोगात् कथन्तस्या उत्प्रेक्षाद्युपयोगित्वमित्याशङ्क्य परिहरति नहीति प्रकाशश्च शीतापनयनं चेति द्वन्द्वः शीतालुः शीतार्त्तः शीतोष्णतृप्रेभ्यस्तदसहन इति आलुः उक्तसिद्धान्तस्य निर्युक्तिकत्वेनाश्रद्धेयत्वमाशङ्कमानं प्रत्याह एवमिति।

पाण्ड्योऽयमिति पाण्ड्यनामाऽयंनृपः अद्रिराज इवाभाति कथंभूतः अंसयोरर्पितोलम्बोहारोयेन सः तथा हरिचन्दनेन रक्तचन्दनेन क्लृप्तः कृतश्चाङ्गरागोनुलेपनं येनतथाभूतः अद्रिराजः कीदृक् बालातपेन रक्तानिसानूनि प्रस्थानियस्यसः तथानिर्झरस्रोतसोरुद्गमेन सहित।

पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनं ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गना ॥

इत्यत्रोत्प्रेक्षयोः कालभेदेऽपि समप्राधान्यं अन्योन्यनिरपेक्षवाक्यद्वयोपात्तत्वात् तदादायेति फेनचन्दनरूपकमात्रोपजीवनेन पूर्वोत्प्रेक्षानपेक्षणात् । नचैवं लिम्पतीव तमोङ्गानीति वदुत्प्रेक्षाद्वयस्य संसृष्टिरेवेयमितिवाच्यं ? लौकिकसिद्धपेषणलेपनपौर्वापर्यच्छायानुकारिणोत्प्रेक्षाद्वयं एवं समप्रधानसङ्करोऽपि व्याख्यातः ।

संदेहसंकरोयथा

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जन्हुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्रपौराः
श्रवणकटुनृपाणामेकवाक्यं विवव्रुः ॥

पिनष्टीति व्याख्यातं प्राक्पौर्वापर्यैणेति तथाच चमत्कारप्रयोजकपौर्वापर्यघटकत्वेनभेदानवभासात्संसृष्टिवैलक्षण्यमिति भावः दर्शादिवद्दर्शपौर्णमासादिवत् अयं च भिन्नकालीनयोरपि समप्राधान्ये दृष्टान्तः फलन्तत्रस्वर्गः प्रकृते तु चमत्कृतिविशेषः ।

शशिनमिति तत्र अजस्येन्दुमत्या स्वयंवरेसमगुणयोरजेन्दुमत्योर्योगेन प्रीतिर्येषां तेपौरानागरिकानृपाणामन्येषां श्रवणयोः कटु पीडाकरं इति पूर्वार्द्धरूपं एकमेववाक्यं विवव्रुः उच्चा-

अत्र इयमिति सर्वनाम्ना यद्यजंष्टवतीन्दुमती विशिष्टरूपेण निर्दिश्यते विम्बभूतो धर्मस्तु पूर्वप्रस्तावात्समगुणयोगप्रीतय—इति पौरविशेषणाच्चावगम्यते तत्र प्रस्तुते धर्मिणि तद्वृत्तान्तप्रतिबिम्बभूताप्रस्तुतवृत्तान्तारोपरूपं ललितमित्यनध्यवसायात्सन्देहः।

विलीयेन्दुः साक्षादमृतरसवापी यदि भवे
त्कलङ्कस्तत्रत्योयदि च विकचेन्दीवरवनं ।
ततः स्नानक्रीडाजनितजडभावैरवयवैः
कदाचिन्मुञ्चेयं मदनशिखिपीडापरिभवं ॥

अत्र यद्येतावत्साधनं सम्पद्येत तदा तापः शाम्यतीत्यर्थे कविसंरम्भश्चेत्तदैतदुपात्तसिद्ध्यर्थमूह इति सम्भावनालङ्कारः एतावत्साधनं कदापि न सम्भवत्येवातस्तापशान्तिरपि गगनकुसुमकल्पेत्यर्थे कविसंरम्भश्चेदुपात्तमिथ्यात्वसिध्यर्थं मिथ्यार्थान्तरकल्पनारूपामिथ्याध्यवसितिरित्युभयथा सम्भवात्सन्देहः ।

रयामासुरित्यन्वयः तेन सर्वनाम्ना साइन्दुमती बिम्बभूतोधर्मः अजकर्मकं वरणं तत्र तस्मिन् पक्षे ।

विलीयेति अग्निसंयोगेन घृतादिवत्केनापि हेतुना विलीनतां प्राप्येत्यर्थः विकचं विकसितं जड़भावः शैत्यं मदनएव शिखी वह्निः संरम्भस्तात्पर्यं सिक्तमिति स्फटिककुम्भान्तःस्थित्वा स्रोतोगतैर्जलैः सिक्तं मौक्तिकमित्यन्वयः ।

एवं—सिक्तं स्फटिककुम्भान्तः स्थितिश्वेतीकृतैर्जलैः ।
मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः—

इत्यादिष्वपि सम्भावना मिथ्याध्यवसितिसन्देह-सङ्करो द्रष्टव्यः ।

मुखेन गरलं मुञ्चन्मूले वसति चेत्फणी ।
फलसन्दोहगुरुणा तरुणा किं प्रयोजनं ॥

अत्र महोरगवृत्तान्ते वर्ण्यमाने राजद्वारदृढ़-खलवृत्तान्तोपि प्रतीयते तत्र किं वस्तुतस्तथाभूतो-रगवृत्तान्त एव प्रस्तुतेऽप्रस्तुतः खलवृत्तान्तस्ततः प्रतीयत इति समासोक्तिः । यद्वा प्रस्तुतखलवृत्तान्त-प्रत्यायनायाप्रस्तुतमहोरगवृत्तान्तकीर्त्तनमप्रस्तुतप्र-शंसा । यद्वा वर्णमानमहोरगवृत्तान्तकीर्तनेन समीपस्थितखलमर्मोद्घाटनं क्रियत इति उभयस्यापि प्रस्तुतत्वात्प्रस्तुतांकुर इति सन्देहः एकवाचकानुप्रवेश-सङ्करस्तु शब्दार्थालङ्कारयोरेवेति लक्षयित्वा काव्य-प्रकाशकार उदाजहार—

मुखेनेति सन्दोहः समूहः लक्षयित्वेति स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयमिति सूत्रेणेत्यर्थः स्पष्टेति अथोऽनन्तरं दिवसरूपमरविन्दं कमलं संवृतो वसंकोचमगमत् कीदृक् स्पष्टमुत्कसन्त उल्लसन्तः किरणा एव केसराणि यस्यास्तथाभूता सूर्यबिम्बरूपा विस्तीर्णा कर्णिकावराटीयस्य तत् ।

स्पष्टोच्छ्वसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दं।
श्लिष्टाष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि सञ्चुकोच॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ यत्रैकस्मिन् श्लोके पदभेदेन शब्दार्थालङ्कारयोः स्थिति तत्र तयोः संसृष्टिरिहतु संकर इति। अलङ्कारसर्वस्वकारस्तु एकस्मिन्वाचकेऽनुप्रवेशोवाच्ययोः स्वारसिकः वाच्य-प्रतियोगिकत्वाद्वाचकस्येति मत्वार्थालङ्कारयोरप्येक-वाचकानुप्रवेशसङ्करमुदाजहार।

सत्पुष्करद्योतितरङ्गशोभि-

श्लिष्टाः प्रकाशाभावेन परस्परं मिलिता अष्टदिग्रूपदलानां कलापस्तन्मुखेनावतारोयस्यास्तादृशी बद्धा अन्धकाररूपामधु-पावलिर्येन तथाभूतमित्यर्थः पदभेदेनेति सोणस्थिएत्थगामेजोए अंमहमहन्तलाअस्सं तरुणाणं हिअअलूडिम्परिसप्पन्तिंणिवरेइ सनास्थत्र ग्रामेय एतां स्फुरल्लावण्यान्ततरुणानां हृदयलुण्ठनं परिसर्पन्ति निवारयतीति संस्कृतं अत्र पूर्वार्द्धेऽनुप्रासस्तृतीय-पादेरूपकमिति तयो संसृष्टिः वाच्यप्रतियोगिप्रतिसम्बन्धि यस्य तद्वाच्यप्रतियोगिकं तत्वादित्यर्थः एवं च काव्यावाच्यस्यानुप्रसादेः शब्दालङ्कारस्य तदनुप्रवेशो न वाचकानुप्रवेश इति वक्तुं युक्तमिति भावः॥

सत्पुष्करेति यस्यां नगर्यां एणीदृशउद्यान सम्बन्धिवापीपय-

न्यमन्दम रब्धमृदङ्गवाद्ये।
उद्यानवापी पयसीव यस्या
मेणीदृशो नाट्यगृहे रमन्ते॥

अत्र नाट्यगृहवापीपयसोः सत्पुष्करेत्यादिविशेषणे शब्दसाम्यं श्लेषः। अमन्दमारब्धेत्यादिविशेषणेऽर्थसाम्यमुपमा तदुभयमेकस्मिन्निवशब्देनुप्रविष्टमिति तदपि न मन्यामहे सत्पुष्करेत्यादिविशेषणेऽपि श्लेषभित्तिकाभेदाध्यवसायरूपातिशयोक्तिलब्धस्य धर्मसाम्यस्यैव तत्रैव शब्दप्रतिपाद्यतया शब्दसाम्यस्य तदप्रतिपाद्यत्वात् श्लेषभित्तिकाभेदाध्यवसायेन धर्मसाम्यमतानङ्गीकारे – त

अहो रागवती सन्ध्या जहाति स्वयमम्बरमित्यादिश्लिष्टविशेषणसमासोक्त्युदाहरणे विशेषणसाम्याभावेन समासोक्त्यभावप्रसङ्गात्। शब्दसाम्यस्यैव

सीव नाट्यगृहे रमन्ते क्रीड़न्ति कीदृशैःसमीचीनैःपुष्करैः कमलद्योतिनीये तरङ्गास्तच्छोभावति गृहपक्षे समीचीनैः पुष्करैर्वाद्यभाण्डमुखैर्द्योतितोयोरङ्गोनृत्यभूमिस्तच्छोभिनीत्यर्थः पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखेजले व्योम्निखड्गफलेपद्मइत्यमरः श्लेषभित्तिकेति श्लेषोभित्तिरिव भित्तिमूलं यस्येत्यर्थः।

रागवतीति रागोनुरागोरक्तिमा च अम्बरमाकाशं वस्त्रं च नन्वत्र विशेषणसाम्यायाभेदाध्यवसायापेक्षेऽपि सत्पुष्करत्यादौ

शब्दप्रतिपाद्यत्वेऽपि तस्योपमावाचकत्वस्यैव प्रामाण्यर्थ मवाचकत्वाभावाच्च। शब्दतोऽर्थतोवा कविसम्मतसाम्यप्रतिपादने सर्वविधेषूपमालङ्कारस्वीकारात्।

अन्यथा-यथाप्रह्लादनाच्चन्द्रः प्रतापात्तपनोयथा। तथैव सोऽभूदन्वर्थोराजा प्रकृतिरञ्जनात्—इत्यनापुपमानःस्यात्—नह्यत्रान्वर्थनामरूपसाम्यं विना किञ्चिदर्थस्य।मंत्र कविविवक्षितमस्ति, तस्माद्यत्रैकस्मिन्नर्थे प्रतिपाद्यमाने अलङ्कारद्वयप्रतीतिस्तत्र तयोरलङ्कारयोरेकवाचकानुप्रवेशः।

यथा –

विधुकरपरिरम्भादात्तनिष्यन्दपूर्वैः
शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम्।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि सहृतचित्तस्तत्रभैमीवनेन॥

अत्र हि प्रतिपाद्यमानोऽर्थः कस्यचिद्विमहद्वस्तुवर्णनमुदात्तमिति लक्षणानुसारादुदात्तालङ्काररूपः। अस-

शब्दसाम्यमात्रेणापुपमोपपत्तेर्न तदपेक्षेत्यत आह शब्दतेति। शब्दतोऽर्थतोवेति शब्दप्रयुक्तमर्थप्रयुक्तं वा यत् कविसम्मतं साम्यं तत्प्रतिपादन इत्यर्थः। सर्वविधे सर्वप्रकारे।

यथेति। यदि आह्लादनादिति धात्वनुसाराच्चन्द्रपदमन्वर्थं अन्वर्थोऽन्वर्थनामा तथात् समानसाम्ययुक्तत्वात्।

सम्बन्धे सम्बन्धकथनमतिशयोक्तिरिति लक्षणादतिशयोक्तिश्च। न च सर्वत्रोदात्तस्यासम्बन्धे सम्बन्धवचनरूपत्वं निर्णीतमिति न विविक्तालङ्कारद्वयलक्षणासमावेशोऽस्तीति वाच्यं ?—दिव्यलोकगतसम्पत्समृद्धिवर्णनादिष्वतिशयास्पृष्टस्योदात्तस्य शौर्यौदार्यदारिद्र्यादिविषयवर्णनेषूदात्तास्पृष्टाया अतिशयोक्तेश्च परस्परविविक्ततया विश्रान्तेः। तयोस्त्वेहार्थवशसम्पन्नसमावेशयोर्नाङ्गाङ्गिभावः एकेनापरस्यानुत्थापनात्। स्वातंत्र्यपारतन्त्र्यविशेषादर्शनाच्च। नापि समप्राधान्यं—यैः शब्दैरिहसम्बन्धिवस्तुप्रतिपाद्यते तैरेव तस्यैव वस्तुनोसम्बन्धे सम्बन्धरूपस्य प्रतिपाद्यमानतया भिन्नप्रतिपादकशब्दव्यवस्थितार्थभेदाभावात्। नापि सन्देहसङ्करः—एकालङ्कारकोटौ तदन्यालङ्कारकोटिप्रतिक्षेपाभावात्, तस्मादिहोदात्तातिशयोक्त्योरेकवाचकानुप्रवेशलक्षणः सङ्करः। क्वचित्सङ्कराणामपिसङ्करोदृश्यते,—

विधुकरेति। स हंसः तव भैमीवनेन रमतत्त्या उद्यानेन क्षतचित्तोऽव्यरचि कृतः कथंभूतेन चन्द्रकिरणाश्लेषादात्तैरक्षोभितैर्निर्झरैः पूर्णचन्द्रकान्तघटितैरलवालैर्विफलीकृतजलसेकप्रकाररूपगौरवेणेत्यर्थः।

शब्दव्यवस्थितेति। शब्दप्रयुक्तेत्यर्थः यथा च समप्राधान्यमर्थ-

यथा—

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितं॥

अत्र तावद्विदुषां सम्पत्सम्यद्विवर्णनमुदात्तालङ्कारः, तन्मूलकोबालाङ्घ्रिलाक्षारुणा इत्यत्र तद्गुणालङ्कारः। तत्रैव वक्ष्यमाणभ्रान्त्युपपादकः पदार्थहेतुककाव्यलिङ्गालङ्कारश्चेति तयोरेकवाचकानुप्रवेशसङ्करः, एवं विद्वद्गृहैश्वर्य्यस्य भोजनृपतेस्त्यागलीलाविलासस्य हेतोश्चाभेदकथनं हेत्वलङ्कारः स च राज्ञोवितरणविलासस्य निरतिशयोत्कर्षाभिव्यक्तिपर्य्यवसायी एतावन्मात्रे कविसंरम्भश्चेदुक्तरूपोदात्तालङ्कारपरिष्कृते हेत्वलङ्कारे विश्रान्तिः कीदृशी सम्पदिति

भेदविषयमिति भावः। प्रतिक्षिप्यते निवार्य्यते कोटान्तरमनेनेति प्रतिक्षेपोविरोधः॥

मुक्ताइति। विदुषां भवनेषु मन्दिरेषु केलीसुरतक्रीड़ायां विच्छिन्नसूत्रात् हारात् गलिताः सम्मार्जनीभिरपसारिताः प्रातः कालेङ्गणसीमान्ते मन्दं चलताम्बालानां चरणलाक्षारसेनारुणाः मुक्ताः दूराद्दाडिमबीजशङ्कितधियः क्रीड़ाशुका यत्कर्षन्ति आकर्षन्ति तद्भोजनृपतेस्त्यागस्य दानस्य लीलायितमित्यन्वयः। तत्रैव बालाङ्घ्रिलाक्षारुणाइत्यत्रैव। वक्ष्यमाणेति शङ्कितधिय इति

प्रश्नोत्तरतयानिरतिशयैश्वर्यवितरणरूपा प्रस्तुतकार्यमुखेन तदीयसम्पदुत्कर्षप्रशंसने कविसंरम्भेऽस्मिन्कार्यनिबन्धनाप्रस्तुतप्रशंसालङ्कारे विश्रान्तिः। कार्यस्यापि वर्णनीयत्वेन प्रस्तुतत्वाभिप्राये तु प्रस्तुताङ्कुरे विश्रान्तिः, अत्र विशेषानध्यवसायात्सन्देहसङ्करः।

किञ्च विद्वद्गृहवैभववर्णनस्यासम्बन्धे सम्बन्धकथनरूपतयाऽतिशयोक्तिरुदात्तालंकारेण सहैकवाचकानुप्रवेशसंकरः निरतिशयवितरणोत्कर्षपर्यवसायिनो हेत्वलंकारस्याप्यङ्गतातथ्यौदार्यवर्णनात्मिकया दुरुक्त्या सहैकवाचकानुप्रवेशसंकरः। तन्मूलकस्याप्रस्तुतप्रशंसालंकारस्य प्रस्तुताङ्कुरस्य वा राजसम्पत्समृद्धिवर्णनात्मकोदात्तालंकारेण सहैकवाचकानुप्रवेशसंकरः। वाचकशब्दस्य प्रतिपादकमात्रपरतया

वक्ष्यमाणेत्यर्थः तयोः तद्रूपकाव्यलिङ्गयोः तन्मूल सङ्करमूलः ताभ्यां सङ्करभ्रान्तिमद्भ्यां तयोः सङ्करभ्रान्तिमतोः तस्य उदात्तस्य हेतुमतः कार्यस्य अभेदकथनं तत्त्यागलीलायितस्य कार्यमिति वक्तव्ये तदेव त्यागलीलायितमित्यभेदकथनं तदीयेति। राजकीयेत्यर्थः॥

अतथ्यौदार्येति। असत्यौदार्येत्यर्थः तन्मूलकस्येति वितरणोत्कर्षपर्यवसायिहेत्वलङ्कारमूलकस्येत्यर्थः। ननु राजसम्पत्समृद्धेर्व्यञ्जनागम्यत्वेनावाच्यत्वात् कथं तद्वर्णनात्मकोदात्तालङ्कारेण सहैकवाचकानुप्रवेशकथनमित्याशङ्कायामाह वाचकशब्दस्येति

व्यञ्जकसाधारण्यादेषां च त्रयाणामेवावाचकानुप्रवेश-संकराणां समप्राधान्यसंकरः । न ह्येतेषां पर-स्परमन्यथाङ्गत्वमस्ति ; उदात्तादिमात्रस्यैव हेत्व-लङ्कारादिचारुतापादकत्वेनातिशयोक्तिसङ्करस्याङ्ग-तयाऽनपेक्षणात् । एवमत्र श्लोके चतुर्णामपि सङ्कराणां यथायोग्यसङ्करः । एवमन्यत्राप्युदाहरा-न्तराण्यूह्यानि ॥

अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।
नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः ॥१॥

त्रयाणामिति । एकउदात्तातिशयोक्त्योरपरो हेत्वतुत्त्योरन्यो व्यङ्गो-दात्ताप्रस्तुतप्रशंसाप्रस्तुताङ्कुरान्यतरयोरित्येवं त्रयाणां परस्पर-मित्यर्थः उदात्तालङ्कारस्य हेत्वलङ्काराङ्गतायाः पूर्वमुक्तत्वादुदात्ता-तिशयोक्तिसङ्करस्यापि तदङ्गत्वमिति शङ्कान्निरस्यति उदात्तादि-मात्रस्यैवेति उदात्तादीत्यादिपदेन हेत्वलङ्कारादीत्यादिपदेन चाप्रस्तुतप्रशंसापरिग्रहः तत्रापि निरतिशयैश्वर्यवितरणोत्कर्ष-पर्यवसायिनो हेत्वलङ्कारस्यैव तादृशवितरणरूपकार्यपरिष्कार-द्वारा तद्रम्यप्रस्तुतराजसम्पदुत्कर्षप्रशंसायामप्रस्तुतप्रशंसाया-मङ्गत्वं न त्वङ्गुतातथ्यवर्णनारूपातुशक्तिसंकरस्याप्यपेक्षेति भावः । यथायोग्यमिति । तथाहि उदात्तत्वङ्गुणयोरङ्गाङ्गिभावसंकरस्य भ्रान्तिमदुदात्तयोरङ्गाङ्गिभावसंकरस्य चाङ्गाङ्गिभावे च संकरः तथा भ्रान्तिमदुदात्तयोरङ्गाङ्गिभावसङ्करस्योदात्ताङ्गकहेत्वलङ्का-रादिसन्देहसंकरस्य चाङ्गाङ्गिभावेन संकरइति सूक्ष्ममति भिरूहनीयम् ।

चन्द्रालोकोविजयतां शरदागमसम्भवः ।
हृद्यः कुवलयानन्दोयत्प्रसादादभूदयम् ॥ २ ॥

इति श्रीमदद्वैतविद्याचार्यश्रीमद्द्विजकुलजलधिकौस्तुभश्रीरङ्गराजाध्वरीन्द्रवरदसूनोरप्पदीक्षितस्य कृतिः कुवलयानन्दः समाप्तः ॥

स्वकीर्त्युद्धृतये ग्रन्थनाम स्वनाम चोपनिबध्नन् ग्रन्थपूर्तिमनुवदति अमुमिति । स्वग्रन्थस्य प्रामाणिकत्वं सूचयितुमाह चन्द्रालोकइति शरदागमसंज्ञकचन्द्रालोकमूलभूतोग्रन्थः शरत्कालागमनेन चन्द्रस्यालोकइति श्लेषः तस्माच्च कुवलयानन्दः स्वग्रन्थोऽभूत् कुवलयस्य कुमुदस्यानन्दइति च श्लेषइति—शिवमास्ताम् ॥

विद्वद्वन्द्यमहामान्यरामचन्द्रात्मजन्मना ।
विदुषा वैद्यनाथेन कृतालङ्कारचन्द्रिका ॥ १ ॥
एनां कुवलयानन्दप्रकाशनविशारदाम् ।
विदाङ्कुर्वन्तु विद्वांसः काव्यतत्वविदाम्बराः ॥ २ ॥
असौ कुवलयानन्दश्चन्द्रालोकोत्थितोऽपि सन् ।
प्रतिष्ठां लभते नैव विनालङ्कारचन्द्रिकाम् ॥ ३ ॥

इति श्रीमत्पदवाक्यप्रमाणपरामभट्टात्मजवैद्यनाथकृतामलङ्कारचन्द्रिकाख्या कुवलयानन्दटीका सपूर्णा ॥

